# गोवाराज्ये संस्कृतप्रशिक्षणवर्गः सम्पन्नः




वर्गस्य समापनकार्यक्रमे भाषमाणः श्रीमान् प्रभाकरजोशीमहाभागः । तेन सह वेदिकायाम् उपविष्टाः (वामतः) श्रीमन् दिलीप बेतकीकरः, अध्यक्षः श्रीमन् अनन्तभटः, प्राचार्यः सुभाषवेलिङ्गकरः, राज्यशिक्षण-शास्त्रसंस्थायाः सञ्चालकः श्रीमान् विजयकुमारपाटणेकरः च ।



कार्यक्रमे उपस्थितः श्रोतृगणः, शिक्षार्थिनः च ।

(वार्ता - ३१ तमे पृष्ठे)

## डा।। केशवचन्द्रदाशः

### १९९५ तमवर्षस्य अन्ताराष्ट्रियकविः

अमेरिकादेशस्य मेरील्याण्ड्प्रदेशे स्थितया अन्ताराष्ट्रियकविसंसदा (International Society of Poets) डा।। केशवचन्द्रदाशः १९९५ तमवर्षस्य अन्ताराष्ट्रियकविरिति घोषितम् । एतदर्थं तस्मै पञ्चसहस्रडालर्परिमितधनराशेः श्रेष्ठतापुरस्कारः, 'इण्टर् न्याशनल् पोयट् आफ् मेरिट्' इत्यङ्कितं फलकं, पृथकृतया स्वतन्त्रपुरस्कारद्वयमपि प्रदास्यन्ते । आगामिनः अगस्ट्मासस्य चतुर्थदिनाङ्के अमेरिकादेशस्य राजधान्यां वाशिङ्गटन् डि. सि. नगर्याम् अन्ताराष्ट्रिय-सम्मेलनसमारोहे डा।। दाशाय पुरस्काराः समर्पयिष्यन्ते । तत्र सोऽपि अन्ताराष्ट्रिय-कविसंसदः नवीनतया सम्मानितसदस्यरूपेण वर्धापयिष्यते ।

इतःपूर्वं डा।। केशवचन्द्रः राष्ट्रियस्तरे अन्ताराष्ट्रियस्तरे च १० पुरस्कारैः सभाजितः । अस्य कवेः संस्कृते २५, आंग्लभाषायां च ८ कृतयो विराजन्ते । तासु १३ उपन्यासाः, ६ कवितासग्रहाः, ३ लघुकथासङ्ग्रहाः, ३ बालकथासङ्ग्रहाः, ८ शोधग्रन्थाश्च प्रसिद्धाः ।

सम्प्रति डा।। दाशः पुरीस्थे श्री जगन्नाथसंस्कृत-विश्वविद्यालये न्यायदर्शनविभागस्य अध्यक्षपदम् अलङ्करोति ।

'सम्भाषणसन्देशः' संस्कृतज्ञपरिवारश्च 'अन्ताराष्ट्रिय' स्तरे ख्यातं 'संस्कृत' कविं डा।। दाशवर्यं सानन्दम् अभिनन्दति ।



प्रधानमन्त्रिणा श्रीमता पि.वि. नरसिंहराववर्येण प्रा. एन्.एस्. ताताचार्यवर्याय प्रथमा रामकृष्णदाल्मिया-श्रीवाणी- अलङ्कार-प्रशस्तिः गते मासे १५ दिनाङ्के प्रदत्ता ।

(विवरणसहिता वार्ता - ३१ तमे पृष्ठे)

सम्पुटः - १
सञ्चिका - १०

सम्भाषण सन्देशः
मासपत्रिका युव सं।। ज्येष्ठमासः, जून् - १९९५



## सन्देशसारः



'अक्षरम्', ८ उपमार्गः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५
दूरवाणी - ६६१७२७६/६६१३०५२

वार्षिकं ग्राहकशुल्कं -
रू. ६०-००

# प्रतिक्रिया

वैशाखमासस्य पत्रिकायाः मुखचित्रगता सुस्मेरमुखी निष्कलङ्कवदना सा बालिका सर्वान् आनन्दयति, सुन्दरं मुखचित्रम् ।

– पि. ए. सहस्रनामन्
*एरणाकुलम्, केरलम्*

सम्भाषणसन्देशे स्थितानि सर्वाणि लेखनानि सरलानि शोभनानि च । 'पदसम्पत्' अस्माकं ज्ञानवर्धनं, शङ्कानिवारणं च करोति । एषा मम प्रार्थना –

राज्ये राज्ये च देशे च
विदेशे चापि शोभताम् ।
ये क्रीणन्ति च सन्देशं
तान्नमामि च नित्यशः ॥

– रामटहलत्रिपाठी
*सुल्तानपुरम् (उ.प्र.)*

अहं पूर्वं दशदिनात्मके संस्कृत-सम्भाषणशिबिरे संस्कृतसम्भाषणं पठितवती । पूर्वम् अपि संस्कृतज्ञानं किञ्चित् आसीत् मम । इदानीम् अहं ज्ञानवर्धनार्थं सम्भाषणसन्देशस्य ग्राहिका जाता । पदरञ्जिनी, शीर्षिकासमस्या च मह्यं बहु रोचते । परन्तु एका समस्या । शीर्षिकासमस्यायाः अन्तिमम् उत्तरम् एव भवन्तः अग्रिमसञ्चिकायां प्रकाशयन्ति । एकैकस्य अपि अक्षरसमूहस्य समुचितपदं दीयते चेत् उत्तमं भवेत् ।

– ल. मीनलोचनी
*तोरप्पाक्कम्, मद्रास्*

अपूर्वाः वार्ताः सङ्गृह्य प्रकाश्यन्ते भवद्भिः । संस्कृतक्षेत्रे एतादृशाः कार्यक्रमाः भवन्ति इति ज्ञात्वा महान्तं सन्तोषम् अनुभवामः । अभिमानं च प्राप्नुमः । यदि शक्यं तर्हि वार्ताविभागार्थम् इतोऽपि अधिकानि पृष्ठानि कल्पयन्तु कृपया ।

– वेङ्कटेश देशपाण्डे
*मुम्बयी*

प्रादेशिकभाषायाम् इव संस्कृतभाषया अपि सर्वेषाम् आशयानां विनिमयार्थं क्रियमाणः अयं श्रमः सुललितः आधुनिकश्च । एषः मासपत्रिकाप्रयत्नः श्लाघ्यः एव, यतः न केवलं विद्यार्थिषु, सामान्यजनेष्वपि संस्कृतप्रचारणम् अनायासेन साधयितुम् एषः उपकरिष्यति । ततः एतस्य प्रयत्नस्य सर्वविधं विजयम् आशासे ।

एकोननवतिवर्षीयः अहम् अवशः क्षीणदृष्टिश्च । मासपत्रिकां पूर्णं पठितुम् अतीव क्लेशः । तथापि यावच्छक्यं यत्नं करिष्ये ।

– इ. राघववारियर्
*वडक्कान्चेरि, त्रिचूर्*

वयं सम्भाषणसन्देशस्य नियतग्राहकाः । पत्रिका बहु प्रेरणाप्रदा अस्ति । अस्माकं कृते च एषा बहुरोचते ।

– जयशङ्करत्रिपाठी, अन्ये च
*कुरुक्षेत्रम्, हरियाणा*

सम्भाषणसन्देशं दृष्ट्वा मम हृदयं प्रफुल्लितं भवति । यथा मयूरः अब्दं दृष्ट्वा नृत्यं करोति तथैव करोति मम हृदयम् अपि । एतस्यां पत्रिकायां संस्कृतप्रश्नोत्तरस्तम्भः, विनोद-कणिकास्तम्भः च प्रकाशनीयः इति मम प्रार्थना । इयं पत्रिका सदा प्रगतिपथे अग्रसरत्वं प्राप्नोतु' इति आशासे ।

– मुरलीधरपाण्डेयः
*राजकीयशिक्षामहाविद्यालयः, चन्दीगढ*

एप्रिल्मासे यथा तथा मे-मासे अमृतवचनानि न आसन् । अस्माकं राष्ट्रे ये ये महापुरुषाः सन्ति तेषां सर्वेषाम् अमृततुल्यानि वचनानि प्रकाशयन्तु ।

– विजि एन्.
*वेडिवच्चान्कोविल्, केरलम्*

सम्भाषणसन्देशः अत्युत्तमपत्रिका । एषा शतविधप्रशंसार्थं, सहस्रविधप्रशंसार्थं च योग्या अस्ति । एतादृशी पत्रिका एषा एका एव ।

– एच्. प्रसादः
*कोळगि, सिद्दापुरम्, कर्णाटकम्*

सम्भाषणस न्देशपत्रिकायाम् एतत् दृष्टं यत् अमेरिकादेशे वैदिकविश्वविद्यालयः वर्तते इति । प्रमोदस्य महान् अवसरः संस्कृतजिज्ञासूनां कृते ।

– चि. कृष्णानन्दपद्मनाभशर्मा
*राजमहेन्द्री (आ.प्र.)*

बालमोदिन्याः सर्वाः कथाः अत्युत्तमाः भवन्ति । बालगीतानि, प्रहेलिकाः इत्यादानि किमर्थं तत्र न प्रकाशयन्ति भवन्तः ?

– स्वामी वेणुगोपालः
*भोपाल (म.प्र.)*

सम्भाषणसन्देशस्य आरम्भं भवन्तः कृतवन्तः यत् तदर्थम् अनन्तकोटि-धन्यवादाः, अभिनन्दनानि च । वयं सम्भाषणसन्देशस्य सर्वेषां लेखनानाम् अर्थं ज्ञातुं शक्नुमः । किन्तु संस्कृतेन लेखने क्लेशः । संस्कृतसम्भाषणे तु महान् क्लेशः । अतः एतस्याः भाषायाः अध्ययनार्थम् अध्यापनार्थं च यानि पुस्तकानि सहायकानि भवन्ति तेषां विवरणं, परिचयं, विमर्शं च सम्भाषणसन्देशे प्रकाशयन्तु इति प्रार्थना ।

– नरेन्द्र न. दवे
*राजकोट, गुजरात्*

सम्भाषणसन्देशपत्रिका प्रतिमासं सर्वाङ्गसुन्दरी सती प्रकाशिता भवति । भुवनमोहिनी सा ।

– विद्याधरमिश्रः
*जयपुरम्*

तारुण्यप्राप्तेः अनन्तरं युवकाः वृद्धौ मातापितरौ उपेक्षया पश्यन्ति यत् तत् नितरां खण्डनार्हम् । पाश्चात्यप्रभावः एतादृशीम् उपेक्षां प्रदर्शयितुं तरुणान् प्रेरयति । किन्तु यावत् 'प्रकाश' सदृशाः तरुणाः भवन्ति तावत् भारतीयसंस्कृतिः न नश्यति । 'अयमेव ममात्मजः' इति कथा अत्युत्तमा ।

– आचार्यः धीरेन्द्रः
*हैदराबाद्*



आत्मीय बन्धो

# व्यक्तित्वविकासार्थं स्यात् यत्नः

यदा भवतां समयावकाशः भवति तदा केषाञ्चन विद्यालयीयानां तरुणानां व्यवहारं परिशीलयन्तु भवन्तः। ततः किं भासेत भवतां मनसि? तारुण्यस्य धार्ष्ट्यम् अल्पमात्रेण सोढुं शक्यम् इति मत्वा किञ्चित् औदार्यं प्रदर्श्येत चेदपि केचन अंशाः तु अवश्यम् अस्माकं मनस्सु खेदं जनयन्ति एव। ते च - अविनयव्यवहारः, संस्कारनाशकेषु चलनचित्रेषु आसक्तिः, परोपहासपूर्वकं सन्तोषप्राप्तिः, देश-समाज-परिसरादिषु सर्वथा अनास्था, विलासैकप्रियता, अशिष्टव्यवहारः, श्रद्धावताम् उपहासः इत्यादयः। सर्वे एतादृशप्रवृत्तिमन्तः न स्युः चेदपि अधिकांशाः जनाः एतादृशाः इत्यत्र नास्ति उत्प्रेक्षा। किमर्थं प्रबला एषा जनशक्तिः एवम् अस्थाने प्रवहति? किमर्थं चारित्र्यहीनं जीवनं यापयति युवसमूहः?

एतस्य प्रश्नस्य उत्तरं प्राप्तुं दीर्घं चिन्तनं करणीयं नास्ति। सद्व्यक्तेः निर्माणार्थं का व्यवस्था अस्ति अस्माकं देशे इति चिन्तनं कृतं चेत् अलम्।

शिशोः बाल्ये मातापितरौ चिन्तयतः यत् विद्यालये सर्वं बोध्यते इति। अतः तौ स्वपुत्रस्य व्यक्तित्वनिर्माणे चिन्तनं न कुरुतः। किन्तु विद्यालयाः व्यक्तित्वनिर्माणे कदापि विशेषप्रयत्नं न कुर्वन्ति। 'पाठ्यपुस्तके स्थितस्य विषयस्य केवलबोधनं मम कर्तव्यम्' इति एकैकः अपि अध्यापकः चिन्तयति। (क्वचित् बोधनम् अपि न प्रचलति इति तु खेदावहः विषयः।) अतः छात्रस्य व्यक्तित्वविकासस्य अध्यापकस्य च कोऽपि सम्बन्धः एव न भवति। विद्यालयकालेतरः समयः विरामसुखस्य अनुभवार्थम् इति छात्राः चिन्तयन्ति, पालकाः अपि एतत् चिन्तनं प्रोत्साहयन्ति। एवं बालानां व्यक्तित्वस्य विकासार्थं कुत्रापि प्रयत्नः एव न दृश्यते। अतः युवजनता मार्गविहीना इव व्यवहरति। यथा निर्वातः प्रदेशः न भवति तथैव निर्विषयं मनः अपि न भवति। रिक्ते मनसि अनपेक्षिताः अहितकराः बहवः अंशाः प्रविशन्ति। युवजनान् सन्मार्गात् भ्रंशयन्ति च।

'मम व्यवहारः मदायत्तः। यथा मह्यं रोचते तथा व्यवहरामि अहम्' इति चिन्तयन्ति बहवः। 'सामान्यस्यापि मम व्यवहारस्य प्रभावः बहूनाम् उपरि पतति' इत्यंशः बहुभिः नितराम् उपेक्ष्यते। सर्वेषाम् अपि व्यवहारः अन्येषु बहुषु प्रभावं जनयति इत्यतः एव प्राचीनाः कानिचन नैतिकमौल्यानि निश्चितवन्तः आसन्। नैतिकमौल्यानाम् उपेक्षातः सपदि एव विपरिणामः न दृश्येत, किन्तु सा च उपेक्षा समाजस्य गुणवत्तां नाशयति इत्यत्र तु नास्ति सन्देहः। भ्रष्टाचारः, असत्यकथनं, वञ्चना, अप्रामाणिकता, कर्तव्यप्रज्ञायाः लोपः, गुणेषु अनादरः इत्यादयः दुर्गुणाः लोके यत् इदानीम् आधिक्येन दृश्यन्ते तस्य मूलं कारणं तावत् व्यक्तित्वनिर्माणे प्रदर्शिता उपेक्षा एव।

व्यक्तित्वस्य निर्माणं केवलात् उपदेशात् न भवति। सद्व्यवहारस्य प्रदर्शनात् भवति तत्। अतः यः अन्यस्य व्यक्तित्वं निर्मातुम् इच्छति तेन स्वयं केचन नैतिकनियमाः पालनीयाः भवन्ति। प्रायः बहूनाम् अत्रैव क्लेशः। उपदेष्टारः सहस्रशः लभ्येरन्। किन्तु उपदेशानुगुणं व्यवहर्तारः अङ्गुलिगणनीयाः अपि न लभ्यन्ते। यावत् भारतीयः समाजः आचारस्य महत्त्वम् अवगत्य स्वव्यवहारे परिवर्तनं न आनेष्यति तावत् प्रायः समाजस्य उन्नतिः गगनकुसुमायते एव। भारतं जगद्गुरुः तदा एव स्यात्, यदा च सामान्यः जनः अपि सदाचारसम्पन्नः स्यात्।

आशायाः उज्जीवकः अपि अयं कश्चन अनुभवः केषाञ्चित् अस्ति यत् यत्र युवकेभ्यः योग्यः संस्कारः दत्तः तत्र युवकाः अत्युत्तमम् एव व्यवहारं प्रदर्शितवन्तः इति। एतादृशः अनुभवः दृढीकरोति यत् युवकाः स्वभावतः न दुष्टाः, योग्यः संस्कारः दत्तः चेत्, योग्यं मार्गदर्शनं कृतं चेत् च ते समाजोपकारकाः एव भवन्ति, स्फटिकम् इव स्वच्छतया विराजन्ते च इति। किन्तु संस्कारदायकं कार्यं सर्वकारः, सर्वकारस्य योजनाः, राजकीयपक्षाः वा कुर्वन्ति इति निरीक्षा व्यर्था एव स्यात्। स्वायत्तसंस्थाभिः प्रचारनिरपेक्षतया करणीयं कार्यम् एतत्। सर्वैः सामान्यैः सहकरणीया योजना एषा। स्वपरिसरे स्थितानां संस्करणार्थं व्यक्तिप्रयत्नः अपि अवश्यं फलदायी स्यात् एव।

**- सम्पादकः**

> **प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः।**
> - मनुस्मृतिः
> स्वकर्तव्यनिरताः जनाः लोकप्रियतां प्राप्नुवन्ति।

# मनुस्मृतौ महिलायाः स्थानम्


• विद्वान् एन्. रङ्गनाथशर्मा

• (अनु) जनार्दन हेगडे




सम्मान्यः रङ्गनाथशर्मवर्यः

सम्मान्यः रङ्गनाथशर्मवर्यः अङ्गुलिगणनीयेषु वैयाकरणेषु अन्यतमः। चामराजेन्द्रसंस्कृत-महापाठशालायाः निवृत्तव्याकरण-प्राध्यापकः एषः सम्भाषणएँ सन्देशस्य विषयपरामर्शकेषु अन्यतमः।

'भारतीयसंस्कृतौ महिलानां कीदृशं स्थानम् आसीत्' इति विषयम् अधिकृत्य एतावता बहवः प्रबन्धाः लिखिताः सन्ति, अनेकानि लेखनानि च प्रकाशितानि सन्ति अपि। किन्तु एतादृशानि लेखनानि पाश्चात्यदृष्टि-चोदितानि एव भवन्ति प्रायः। पाश्चात्याः विद्वांसः भावयन्ति स्म यत् भारतीयसंस्कृतेः परीक्षार्थम् अस्माकम् एव निकषोपलसदृशं सामर्थ्यम् अस्ति इति। आंग्लाः एव भारते शासकाः आसन् इत्यतः भारतीयानां तोलनाधिकारः पाश्चात्यपण्डितैः सहजतया प्राप्तः आसीत्। तेषाम् अनुकरणात् एव परमानन्दं प्राप्नुवन्तः भारतीयविद्वांसः अत्र तादृशान् एव आपणान् आरब्धवन्तः, यत्र च पाश्चात्यतुलाम् अवलम्ब्य पाश्चात्य-वस्तूनाम् एव विक्रयणं क्रियते स्म। एतादृशैः 'विद्वद्भिः' स्त्रीणां स्थानम् अधिकृत्य लिखितानि लेखनानि तदा तदा प्रकट्यन्ते। एतादृशानां लेखनानां सारः एवं सङ्ग्रहीतुं शक्यः - ''वेदकाले स्त्रीणां गौरवोपेतं स्थानं यद्यपि आसीत्, तथापि धर्मशास्त्रकाले तासां स्थानं हीनम् आसीत्। 'न स्त्री स्वातन्त्र्यमर्हति' इति उद्घोषयन् स्मृतिकारः मनुमहाराजः तासाम् अधोगतेः मार्गदर्शी जातः'' इति।

**स्त्रीस्वातन्त्र्यम् अधिकृत्य विशेषचर्चा प्रचलति एषु दिनेषु। पाश्चात्यदृष्टिचोदितया विचारधारया प्रेरिताः बहवः 'विद्वांसः' मनुस्मृतिं निन्दन्ति। अनाघ्रातस्मृतयः ते प्रतिपादयन्ति यत् मनुना स्त्री अधरीकृता इति। एवं तर्हि स्त्रीविषये मनुमहर्षेः का दृष्टिः आसीत् इति जिज्ञासा स्यात् बहूनाम्। तादृशीं जिज्ञासां शमयितुम् प्रस्तुतीक्रियते एषः लेखः। लेखस्य प्रथमः भागः अस्ति अत्र।**

'धर्मशास्त्राणि पुरुषैः लिखितानि। ते च पुरुषाः समाजे स्वश्रेष्ठतां प्रतिष्ठापयन्तः स्त्रीम् अधोगतिं प्रापयन्तः भोगसाधनानि कृतवन्तः' इत्यस्ति तेषां कथनस्य आशयः। एतान् विचारान् मान्याः अपि केचन मौनसम्मत्या अङ्गीकुर्वन्ति इत्यतः वस्तुस्थितेः परीक्षणार्थम् इदमत्र प्रस्तूयते किञ्चित्। विषयः अत्र सङ्क्षेपेण एव निरूप्यते, यतः विस्तरस्य न अयम् अवसरः। ते च मनुस्मृतिम् एव विशेषतः निन्दन्ति इत्यतः मनुस्मृतिम् आधारीकृत्य एव किञ्चिदत्र विचार्यते।

प्रथमं तावत् चिन्तयाम - किं नाम धर्मशास्त्रम्? धर्मशास्त्रं नाम तादृशः विधिकोषः न, यश्च पानमत्तानां, दुराचारपराणाम्, अज्ञानां च मतानि सम्पाद्य शासनसभां प्रविश्य रागद्वेषादिकं सर्वथा अपरित्यज्य कलहैकवृत्त्या व्यवहरद्भिः शासकैः अङ्गीकृतः भवति। ऋषिजनाः मानवानाम् अभ्युदय-निश्रेयससिद्ध्यै तपोबलेन यत् साधनम् आसादितवन्तः सः एव धर्मो नाम। ते धर्मशास्त्रं परमया करुणया स्त्रीपुरुषाणां हिताय एव रचितवन्तः, न तु अधिकार-धन-कीर्त्यादि-स्वार्थ सम्पादनार्थम्। सर्वकारस्य विधिनियमाः तावत् जनानां स्वच्छन्दप्रवृत्तिं निरुध्य तेषां बाह्यव्यवहारस्य नियन्त्रणं कुर्वन्ति। किन्तु धर्मः तावत् न केवलं बाह्यव्यवहारम्, अपि तु अन्तःकरणप्रवृत्तिम् अपि नियन्त्रयति। जीवनस्य लक्ष्यं निर्दिश्य, चित्तं शुद्धीकृत्य श्रेयोमार्गम् उपदिशति धर्मः। धर्ममार्गाश्रयणम् अस्ति चेत् सर्वकारस्य विधिनियमादीनां का आवश्यकता? अतः एव महाभारतं वदति - 'धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्' इति। धर्मात् शासननियमस्य गतार्थता स्यात् नाम, किन्तु शासननियमात् धर्मस्य न कदापि गतार्थता। शासननियमस्य रचनायां सन्दर्भे स्वार्थपरतायाः, अधिकारलालसायाः च हस्तक्षेपः भवेत्। किन्तु धर्मविषये न तथा। धर्मस्य सामान्यं लक्षणम् एतत् -

*विद्वद्भिः सेवितः सद्भिः नित्यमद्वेषरागिभिः।*
*हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत॥*

*-मनुस्मृतौ - २.१*

''वेदार्थज्ञाः, रागद्वेषरहिताः, धार्मिकाः, सज्जनाः विद्वांसः यं हृत्पूर्वकम् अङ्गीकृत्य यस्य अनुगुणम् आचरन्ति सः एव धर्मः।''

भारतीयानां दृष्ट्या वेदाः परमं प्रमाणम्। वेदोक्तम् एव विषयं विशदीकुर्वन्ति धर्मशास्त्राणि। इदानीं बहवो वेदभागाः लुप्ताः सन्ति। 'ऋषयः वेदोक्तान् विषयान् स्मृत्वा धर्मशास्त्राणि रचितवन्तः' इति वदन्ति शिष्टाः। अतः एव धर्मशास्त्राणाम् अपरं नाम 'स्मृतयः' इति। स्मृतिग्रन्थेषु मनुस्मृतेः एव श्रेष्ठत्वम् अङ्गीक्रियते सर्वैः अपि धर्मशास्त्रकारैः। विद्वांसः अङ्गीकुर्वन्ति यत् मनुस्मृतिविरुद्धं यत्किमपि

वचनं न प्रमाणभूतम् इति, याज्ञवल्क्यादिस्मृतिषु मनुस्मृतौ अनुक्ताः एव विषयाः उच्यन्ते इति च। भृगुः वदति - 'मनुः सर्वज्ञानमयः' इति । अतः वेदकालस्मृतिकालयोः पृथक्करणं, 'वेदकालस्य धर्मस्वरूपात् भिन्नम् आसीत् स्मृतिकालस्य धर्मस्य स्वरूपम्' इति कथनं च सर्वथा असङ्गतम्। वेदे एव मनोः उपदेशस्य प्रशंसा दृश्यते । 'मनुर्वै यत्किञ्चिदवदत् तद् भेषजम्' इति वदति छान्दोग्यब्राह्मणम्।

प्रकृतं तावत् स्त्रीणां विषये मनुना यत् उक्तं तत् परिशीलयाम, येन च स्त्रीविषयिणी मनुमहर्षेः दृष्टिः स्फुटा स्यात्।

१. जगत्सृष्टिनिरूपणावसरे कश्चन श्लोकः -

*द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ।*
*अर्धेन नारी ... ... ...॥* -मनु. - १.३२

'ब्रह्मा स्वदेहं द्विधा विभज्य एकार्धेन पुरषत्वम्, अपरार्धेन स्त्रीत्वं च प्राप्तवान्' इति । देहस्य भागयोः कतरः उच्चः, कतरः नीचः ? अतः एव महाकवेः कालिदासस्य कुमारसम्भवे देवाः ब्रह्माणं स्तुवन्तः - ''स्त्रीपुंसावात्मभागौ ते'' (कुमार. - २.७) इति वदन्ति।

२. स्त्रीशिशोः नामकरणविषये अपि मनोः शुभात्मिका दृष्टिः । सः वदति -

*स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।*
*माङ्गल्यं दीर्घवर्णान्तम् आशीर्वादाभिधानवत् ॥*
-मनु. - २.३३

स्त्रीशिशोः नाम सुखोच्चारणयोग्यं, क्रूरतासूचनरहितं, मनोहरं, मङ्गलकरं, देवतानुग्रहबोधकं च स्यात्' इति।

उदा - यशोदा, देवी इत्यादयः।

३. सम्भाषणसमये परनारीम् उद्दिश्य - 'हे भवति, सुभगे, भगिनि' इत्यादयः गौरवार्हाः शब्दाः प्रयोक्तव्याः। (२.१२९) यदि स्त्री अल्पवयस्का भवति तर्हि 'आयुष्मति' इति सम्बोधनं करणीयम्।

४. मातृभगिनी, पितृभगिनी, मातुलानी, श्वश्रूः - इत्यादयः मातृवत् गुरुपत्नीवत् च आदरेण द्रष्टव्याः । भ्रातृजाया प्रतिदिनं पादयोः नमस्करणीया । परस्थलं गत्वा यदा प्रत्यागम्यते तदा बन्धुमहिलाः साष्टाङ्गं नमस्करणीयाः।

-२.१३१-१३३

५. प्रयाणसमये यदि स्त्री अभिमुखम् आगच्छति तर्हि विनयेन मार्गः देयः।

-२.१३८

६. *सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते ।* - २.१४५

जनकात् सहस्रगुणितं गौरवं मातुः स्यात्।

७. गुरुपत्नी वयसा कनिष्ठा चेदपि विधिवत् वन्दनं (साष्टाङ्गनमस्कारः) करणीयम्।

-२.२१६

८. i) *तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते ।* - २.२२८

माता, पिता, आचार्यः च यदा सन्तुष्टाः भवन्ति तदा एव तपः पूर्णतां याति।

ii) *तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ।* - २.२२९

माता-पितृ-गुरूणां सेवा एव श्रेष्ठं तपः।

iii) *त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ।* - २.२३०

माता, पिता, आचार्यश्च वेदस्वरूपाः, त्रेताग्निस्वरूपाश्च।

iv) *त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते ।*
*एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते ॥* - २.२३७

माता-पितृ-गुरूणां सेवा एव श्रेष्ठः धर्मः। अन्ये गौणाः।

९. i) *माता पृथिव्या मूर्तिः ।* - २.२२५

ii) *माताग्निर्दक्षिणः स्मृतः ।* - २.२३१

गार्हपत्याग्निः, दक्षिणाग्निः, आहवनीयाग्निः इति त्रयः अग्नयः। तत्र माता दक्षिणाग्निस्वरूपा भवति।

iii) *इमं लोकं मातृभक्त्या ... (समश्नुते) ।* - २.२३३

मातृभक्त्या जनाः एतं लोकं जयन्ति।

१०. *स्त्रीरत्नं दुष्कुलादपि ।* -२.२३९

**वैदिकधर्मस्य पालयित्र्या भारतीय-महिलया कीदृशं स्वातन्त्र्यम् अपेक्षेत ? स्वच्छन्दसञ्चारः, हावभावख्यापनं, यथेच्छं परस्थलगमनम् इत्यादिकम् अपेक्ष्यते किम् ? 'धार्मिककर्मसु न मम श्रद्धा । धिक् देवपूजाम् । धिक् सम्प्रदायादिकम्' इत्येतत्कथनरूपं स्वातन्त्र्यम् अपेक्ष्यते तया ? एतत्सर्वं स्वच्छन्दवृत्तिः, न तु स्वातन्त्र्यम्। मनुः अन्ये शास्त्रकाराः च स्वच्छन्दवृत्तेः निषेधं कुर्वन्ति।**

कन्या नीचकुले जाता चेदपि यदि गुणवती भवति तर्हि परिग्रहयोग्या भवति । (किन्तु वरः गुणवान् अपि यदि दुष्कुले भवति तर्हि तस्मै कन्या न प्रदेया!!)

उपरि यानि वाक्यानि निर्दिष्टानि तेषां परिशीलनात् किं भासते भवतां मनसि ? मनुस्मृतिकारः पुरुषपक्षपाती इति किं भासते ? जनकात् अपि माता सहस्रगुणितं पूज्या इति वदति मनुः । यतः प्रसूति-पालन-पोषणादिकं कुर्वत्याः मातुः श्रमः अत्यधिकः। तदर्थम् एव तादृशं गौरवं तस्याः।

प्रकृतिसिद्धानि कानिचन दौर्बल्यानि मनसि निधाय केषुचित् अंशेषु स्त्रीणां स्थानं निश्चिनोति मनुमहर्षिः। तद्यथा -

११. *स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः ।*
*नारीयानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् ॥* - ३.५२

स्त्रीसम्बद्धं धनं, सुवर्णं, वस्त्रम्, ऐश्वर्यम् इत्यादीनाम् उपयोगं ये बान्धवाः कुर्वन्ति ते पापिनः भवन्ति, अधोगतिं च यान्ति ।

पुरुषाः औद्धत्येन कदाचित् स्त्रीधनं बलात् वशीकृत्य उपयोक्तुम् अर्हन्ति । अतः एतत् वचनं मनोः ।

**यथा इदानीं तथा प्राचीने काले ग्रामे ग्रामे विद्यालयाः न आसन् । मातापित्रोः सकाशात् एव कन्यया विद्या यथाशक्ति ग्रहीतव्या भवति स्म । अतः वयसा, विद्यया, लोकानुभवेन च ज्येष्ठस्य पत्युः प्राधान्यं गृहे सहजतया भवति स्म । एतद्विषये स्त्रियाः 'अस्वातन्त्र्यं' भवति स्म इति तु सत्यम् एव । किन्तु एतादृशम् अस्वातन्त्र्यं कुत्र नास्ति ?**

गृहकृत्येषु स्त्री व्याप्ता भवति स्म । धनार्जनादयः बाह्यव्यवहाराः पुरुषायत्ताः भवन्ति स्म । एवम् उभयसहकारेण कौटुम्बिकरथः निर्विघ्नम् अग्रे गच्छति स्म । धनबलात् स्वतस्सिद्धात् देहबलात् च पुरुषः अहङ्कारेण व्यवहरन् नारीम् उपेक्षया पश्येत् इत्यतः स्मृतिकारस्य हितवचनम् एतत् ।

१२. *पितृभिः भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।*
*पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥* - ३.५५

विवाहानन्तरम् अपि पिताभ्रात्रादिभिः स्त्री आदरेण द्रष्टव्या, वस्त्रभोजनादिदानेन सत्करणीया च । पतिगृहे अपि देवरादिभिः अपि एवम् एव व्यवहरणीयम् ।

१३. *यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।*
*यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥* - ३.५६

यस्मिन् गृहे स्त्रियाः सम्मानः भवति तत्र देवाः वरप्रदाः भवन्ति । यत्र ताः न पूज्यन्ते तत्र प्रवर्तमानाः सर्वाः क्रियाः विफलाः भवन्ति ।

१४. *शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् ।* - ३.५७

यस्मिन् कुले पत्नी, स्नुषा, पुत्री इत्यादयः शोकम् अनुभवन्ति तत् कुलं शीघ्रं नाशं प्राप्नोति । यत्र ताः योग्यं गौरवम् अप्राप्नुवत्यः शपन्ति तानि गृहाणि पिशाचग्रस्तानि इव विनाशं यान्ति । - ३.५८

१५. *सुवासिनीः कुमारीश्च रोगिणो गर्भिणीः स्त्रियः ।*
*अतिथिभ्योऽग्र एवैतान्भोजयेदविचारयन् ॥* - ३.११४

भोजनविलम्बसन्दर्भः यदा भवति तदा सद्योविवाहिताभ्यः, गर्भिणीभ्यः, अविवाहिताभ्यः पुत्रीभ्यश्च अतिथीनां भोजनात् पूर्वम् एव भोजनं दातव्यम् ।

पुरुषाणां पूर्वभोजनस्य प्रस्तावः एव नास्ति । स्त्रीविषये विशेषानुकम्पा मनुमहर्षेः ।

१६. *भार्या पुत्रः स्वका तनुः* - (४.१८४)

इति वदति मनुः । पत्नी शरीराभिन्नतया द्रष्टव्या इति वदति सः । समत्वादपि श्रेष्ठतरः अभेदः एव उक्तः अस्ति तेन ।

१७. प्राचीने काले नदीतरणं नौकया एव भवति स्म । तत्सम्बन्धितया वदति मनुः - 'गर्भिणी निश्शुल्कं नौकया नेतव्या, ततः शुल्कं न स्वीकरणीयम्' इति । - ८.४०७

१८. 'पत्नी देवैः दत्ता, न तु मया इच्छानुसारं प्राप्ता' इति भावनीयम् । दातॄणां देवानां सन्तोषार्थं सदा सा रक्षणीया । - ९.९५

१९. स्त्रीरक्षणं नाम बलात् गृहे बन्धनं न । पश्वादीनां पालनं यथा, तथा निर्बन्धेन रक्षितुं ताः न अर्हाः । तासां शीलचारित्र्यादीनां भङ्गः यथा न स्यात् तथा रक्षणं करणीयम् । स्वशीलादिरक्षणे ताः स्वयं प्रवृत्ताः स्युः । आत्मानम् आत्मना याः रक्षेयुः ताः सुरक्षिताः भवन्ति । - ९.१२

तासां मनःकालुष्यं यथा न स्यात्, ताः पत्यनुकूलाः यथा स्युः, तथा कर्तुं पुरुषैः केचन नियमाः अनुसरणीयाः -

१. सम्पादितं धनं पत्न्यधीनं करणीयम् ।
२. गृहकृत्यसम्बद्धः व्ययव्यवहारः पत्न्याः एव स्यात् ।
३. स्वच्छता, धार्मिककार्याणि, पाकः, गृहव्यवस्था इत्यादयः तासाम् अधीनाः स्युः । - ९.११

वैदिकधर्मस्य पालयित्र्या भारतीयमहिलया एतस्मात् भिन्नं कीदृशं






स्वातन्त्र्यम् अपेक्ष्येत ? स्वच्छन्दसञ्चारः, हावभावख्यापनं, यथेच्छं परस्थलगमनम् इत्यादिकम् अपेक्ष्यते किम् ? 'धार्मिककर्मसु न मम श्रद्धा। धिक् देवपूजाम्। धिक् सम्प्रदायादिकम्' इत्येतत्कथनरूपं स्वातन्त्र्यम् अपेक्ष्यते तया ? अथवा, 'मम व्ययार्थं यावत् धनम् आवश्यकं तावत् अहं सम्पादयिष्यामि। किं भवतः धनेन ?' इति कथनावकाशः अपेक्ष्यते ? एतत्सर्वं स्वच्छन्दवृत्तिः, न तु स्वातन्त्र्यम्। मनुः अन्ये शास्त्रकाराः च स्वच्छन्दवृत्तेः निषेधं कुर्वन्ति।

एतस्मिन् काले विवाहस्य उद्देशः अन्यः स्यात् कदाचित्। काममात्रोद्देशकः स्यात् विवाहः। स्वच्छन्दव्यवहारार्थं कृतः 'सन्धिः' वा स्यात्। किन्तु विवाहविषये प्राचीनानां दृष्टिः अन्या एव आसीत्। विवाहः संस्काराधायकः इति परिगण्यते स्म तैः। सद्गुणसंवर्धनपूर्वकं विकासप्राप्तिः एव संस्कारः नाम। विवाहानन्तरं पत्नी पत्युः सहपथिका भविष्यति। 'जायापत्योर्न विभागो विद्यते' इति वदति आपस्तम्बधर्मसूत्रम्। 'धर्मे च अर्थे च कामे च नातिचरामि' इति विवाहसमये वचनं ददाति वरः। आजीवनम् एतत् वचनं पत्या पत्न्या च पालनीयम् इति नियमं विधत्ते मनुः।

पतिः पत्न्याः अपेक्षया ज्येष्ठः एव भवति खलु ? सः गुरुकुले विद्याभ्यासं कृत्वा देशसञ्चारं कृत्वा च अनुभवं सम्पादयति स्म। यथा इदानीं तथा प्राचीने काले ग्रामे ग्रामे विद्यालयाः न आसन्। मातापित्रोः सकाशात् एव कन्यया विद्या यथाशक्ति ग्रहीतव्या भवति स्म। एवं वयसा, विद्यया, लोकानुभवेन च ज्येष्ठस्य पत्युः प्राधान्यं गृहे सहजतया भवति स्म। एतद्विषये स्त्रियाः 'अस्वातन्त्र्यं' भवति स्म इति तु सत्यम् एव। एतादृशम् अस्वातन्त्र्यं कुत्र नास्ति ? सर्वकारस्य मुख्यकार्यदर्शी अपि अस्वतन्त्रः, मन्त्री अपि अस्वतन्त्रः। यत्र स्वतन्त्रौ द्वौ भवतः तत्र प्रायः विनाशः भवति। बहुभिः सहोदरैः युक्तस्य गृहस्य निर्वहणव्यवस्थां ज्येष्ठसहोदरः पश्यति प्रायः। तथा चेत् अन्येषां सहोदराणां स्वातन्त्र्यम् अपहृतम् इति किं वक्तुं शक्नुयाम ?

अग्निहोत्रादिषु नित्यकर्मसु विवाहादिषु नैमित्तिककर्मसु च पत्न्याः ऋते, पतिः एकाकी प्रवृत्तिं न अर्हति। पत्नीम् अविसृज्य तेन धनसङ्ग्रहः अपि न करणीयः, भूम्यादिविक्रयणम् अपि न करणीयम्। किन्तु स्त्रीविषये मनोः कृपां पश्यन्तु तावत् -

१. मातापितृभ्यां दत्तानि धनकनकादीनि स्त्रियाः एव भवन्ति। तेषु पत्युः न अधिकारः। किन्तु पत्युः सम्पत्तिः पित्रार्जिता, स्वार्जिता वा भवतु, तत्र पत्न्याः समाधिकारः भवति एव।
२. पत्या कृतस्य पुण्यकार्यस्य अर्धभागः पत्न्या प्राप्यते। किन्तु तेन कृतेन पापेन सा लिप्ता न भवति।
३. पत्नी कदापि केनापि कारणेन न परित्यक्तव्या। अन्नवस्त्रादिना सा पालनीया एव।

*भार्याया व्यभिचारिण्याः परित्यागो न विद्यते।*
*दद्यात् पिण्डं च चेलं च ॥* -हारीतस्मृतिः

लोके व्यभिचारः नाम 'जारत्वम्' इति अर्थः। किन्तु धर्मशास्त्रे तावत् धर्मार्थकामेषु नियमोल्लङ्घनं व्यभिचारशब्देन निर्दिश्यते। विवाहकाले कृतायाः प्रतिज्ञायाः उल्लङ्घनं व्यभिचारः। 'अन्योन्यस्याव्यभीचारः भवेदामरणान्तिकः' इत्यादिषु श्लोकेषु (मनु - ९.१०१) अयम् एव अर्थः अभिप्रेतः।

व्यभिचारस्य प्रायश्चित्तरूपेण महिलया भूमौ शयानया कृच्छ्रम् आचरणीयम्। किन्तु पुरुषः व्यभिचारं करोति चेत् कठोरं दण्डनं तस्य। ऋते पत्न्याः धर्मकार्यं कृतं चेत्, धनसङ्ग्रहः कृतः चेत्, परस्त्रीसङ्गः कृतः चेत् च विधीयमानं दण्डनं तावत् -

*"दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय - 'दारव्यतिक्रमिणे भिक्षम्' इति सप्तागाराणि चरेत्। सा वृत्तिः षण्मासान्।"*
*-आपस्तम्बधर्मसूत्रम्*

एवं मनुमहर्षिः अन्ये शास्त्रकाराः चापि स्त्रियम् अनुकम्पया औदार्येण च दृष्टवन्तः सन्ति। धर्मशास्त्रम् अपरिशील्य, वस्तुस्थितिम् अज्ञात्वा केचन मनुस्मृतिं स्मृतिकारान् च आक्षिपन्ति।

**(एवं तर्हि 'न स्त्री स्वातन्त्र्यमर्हति' इति वदतः मनोः आशयः कः इति प्रश्नः स्यात् भवताम्। तद्विषये चर्चा, तन्नाम एतस्य लेखनस्य अपरः भागः अग्रिमसञ्चिकायां प्रकाशयिष्यते।)** ●

### वाचकेषु विज्ञप्तिः

पत्रिकाः सम्यक् न प्राप्यन्ते इति तत्र तत्र आक्षेपः श्रूयते। अस्मत्कार्यालये तु सर्वेभ्यः ग्राहकेभ्यः यथा पत्रिका प्रेषिता भवेत् तथा विशेषजागरूकता निरुह्यते एव। सङ्केते अपूर्णता अपि पत्रिकायाः अप्राप्तेः कारणं स्यात् कदाचित्। अतः भवतु निवेदनं यत् पत्रिकावरणस्य उपरि स्थितः भवत्सङ्केतः सुस्पष्टः अस्ति वा इति, Pin code इत्यादिकम् अपि सङ्केते अस्ति वा इति च परिशीलयन्तु इति। सङ्केते अल्पः लोपः दृष्टः चेदपि अस्मान् पत्रद्वारा सूचयन्तु। वयं भवत्सूचितान् अंशान् सङ्केते योजयिष्यामः, येन पत्रिका नियततरूपेण प्राप्येत। सङ्केतः आंग्ललिप्या स्फुटतया लिखितः चेत् सङ्गणकयन्त्रे योजने सौलभ्यं स्यात्। **पत्रलेखनसमये स्मरन्तु यत् ग्राहकसङ्ख्या (Sub No.) अवश्यम् उल्लेखनीया इति।** -सम्पादकः

# रसवार्ताः

**दूरदर्शने** नृत्यन्तं नायकं, नृत्यन्तीं नायिकां वा दृष्ट्वा कदाचित् भवन्तः चिन्तितवन्तः स्युः - 'यदि नायिकया सह नृत्यन् नायकः, नायकेन सह नृत्यन्ती नायिका वा अहं स्यां तर्हि वरम् अभविष्यत्' इति । एतं स्वप्नं साकारीकर्तुं समर्थं दूरदर्शनयन्त्रं जपानदेशीया सान्योसंस्था प्रायोगिकरूपेण सज्जीकृतवती अस्ति । एतत् दर्शन-श्रवण-सहभागयुक्तं दूरदर्शनं मनोरञ्जनक्षेत्रे अभूतपूर्वं परिवर्तनं विधातुम् अर्हति ।

इतरदूरदर्शनानाम् इव एतस्य अपि दूरदर्शननियन्त्रकसाधनं (रिमोट् कण्ट्रोलर्) भवति । वीक्षकः नियन्त्रकसाधने स्थितं सहभागपिञ्जं यदा नुदति तदा दूरदर्शने तदीयं मुखं दृष्टिगोचरं भवति । दूरदर्शने दृश्यमाने



चित्रे बहूनि मुखानि भवितुम् अर्हन्ति खलु ? अतः वीक्षकः स्वमुखं कुत्र स्यात् इति निश्चित्य प्राशस्त्यपिञ्जं नुदेत् । तदा अपेक्षिते स्थले एव तदीयं मुखं दृश्यते ।

**वञ्चकानां** ग्रहणार्थम् एव आरक्षकाः भवन्ति । एवं स्थिते आरक्षकाणाम् एव वञ्चना कृता चेत् ? एतादृशी घटना बेङ्गलूरुनगरे प्रवृत्ता ।

कश्चित् आरक्षकालयात् अनतिदूरे स्थित्वा 'चोरः, चोरः' इति आक्रोशनं कृतवान् । कर्तव्यबुद्ध्या सर्वे आरक्षकाः चोरग्रहणार्थं धावितवन्तः । चोरं कमपि अप्राप्य यावत् ते प्रत्यागताः तावता आरक्षकालयस्थं निस्तन्तुश्रवणसाधनं केनापि चोरितम् आसीत् !!

**नीतिः** - न केवलं निर्जने गृहे, अपि तु निर्जने आरक्षकालये अपि चौर्यं भवितुम् अर्हति ।




**लिखितसन्देशं** क्षणमात्रेण प्रेषयितुं 'फेक्स्'व्यवस्था उपयुज्यते इति तु सर्वैः ज्ञातम् एव । किन्तु फेक्स्व्यवस्थया प्रेषितः सन्देशः अपि वर्षानन्तरं प्राप्तः इति काचित् वार्ता !! तत्रापि प्रेषयिता न सामान्यः, अपि तु देशस्य प्रधानमन्त्री नरसिंहराववर्यः एव । गतवर्षे उच्चाधिकारिणां नियुक्तिसम्बद्धः सन्देशः तेन बाङ्काकनगरतः कांग्रेस्कार्यालयं प्रति प्रेषितः आसीत् । स च वर्षानन्तरं प्राप्तः तेन कार्यालयेन !




एतद्विषये काचित् किंवदन्ती एवं श्रूयते - 'प्रवासार्थं गमनसमये नियुक्तिम् अर्हताम् आवली नीता आसीत् राववर्येण, सा च युतकस्य कोषे स्थापिता आसीत् अपि । ततः स च विषयः तेन विस्मृतः । वर्षानन्तरं तेन यदा तच्च युतकं पुनः धृतं तदा कोषे सा आवली प्राप्ता । ततः झटिति सः तां कांग्रेस्कार्यालयं प्रति प्रेषितवान्' इति ।

'वस्तुस्थितिः या काऽपि स्यात् नाम । राववर्येण प्रेषितः सन्देशः तदीयस्वभावानुगुणम् एव सञ्चारम् अकरोत् इति यत् तत् तु युक्तम् एव' इति केचन यत् वदन्ति तत् विश्वासार्हं वा न वा इति वयं तु न जानीमः ।

**सञ्चारी** चिकित्सालयः, सञ्चारी ग्रन्थालयः, सञ्चारी वित्तकोषः सञ्चारि उपाहारमन्दिरं च श्रुतं दृष्टं च स्यात् भवद्भिः । किं 'सञ्चारी शौचालयः' दृष्टः श्रुतः वा कुत्रचित् ? तादृशः अपूर्वः शौचालयः अस्ति कर्णाटके उडुपिनामके नगरे । मेटेडार्वाहनम् एव शौचालयानुकूलतया परिवर्तितम् अस्ति अत्र । चतुर्विंशतिघण्टाः यावत् अत्र जलव्यवस्था, विद्युद्व्यवस्था, स्वच्छता-व्यवस्था च भवति । मलिनांशः मालिन्य-




वाहककुल्यां यथा गच्छेत् तथा व्यवस्था अपि अस्ति । पुरुषेभ्यः महिलाभ्यः च पृथक् विभागाः अपि सन्ति ।

नगरसभया एषा व्यवस्था कृता अस्ति । अधोगतिं प्राप्तवतः प्राचीनशौचालयस्य समीकरणार्थं यदा प्रयत्नः कृतः तदा कैश्चित् न्यायालयस्य स्थगनाज्ञा आनीता । अतः तत्र अभिवृद्धिकार्ये विघ्नः उत्पन्नः । शौचालयस्य अभावतः प्रयाणिकानां क्लेशः न भवेत् इति उद्देशेन एषा व्यवस्था कृता नगरसभया ।

# कथा

# सर्पः

- १ -

इदानीन्तनघटना न एषा, अपि तु प्रायः चत्वरिंशद्वर्षेभ्यः पूर्वं घटिता घटना।

तदानीं मम वयः केवलं षड् वर्षाणि। सूर्योस्तमयसमयः। मल्लिकालतानिकुञ्जस्य च्छायायां क्रीडन् आसम्। पादस्य अधोभागे मृदुस्पर्शः अभवत्। हठात् - ''बुस्...'' इति शब्दः श्रुतः। फणां विशालीकृत्य कश्चन सर्पः स्थितः अस्ति ! मातामही कथं तम् अभिज्ञातवती इति न जानामि। झटित्येव मम हस्तं गृहीत्वा सा शरवेगेन ततः माम् आकृष्य मञ्चे प्रक्षिप्तवती एव।

सप्ताहं यावत् अहं बहुवारं मृत्योः समीपं गत्वा आगतवान्। प्रतिक्षणं भयम्। मञ्चे एव आसम्। मञ्चतः अधः पादं निक्षेप्तुम् अवसरः न आसीत्। कोऽपि 'राम !' इति माम् आह्वयति चेत् झटित्येव सर्पः पुच्छबलेन उत्थाय प्रत्यक्षः भूत्वा फूत्करोति स्म।

तस्मात् मां रक्षितुं मातामह्या कृताः प्रयत्नाः असंख्याकाः। मन्त्रिताः सिकताः आनाय्य सा गृहे सर्वत्र प्रक्षिप्तवती। बहुप्रयत्नेन गरुडस्य पिच्छानि सम्पाद्य मञ्चस्य पादेषु बद्धवती। अहितुण्डिकं (सर्पग्राहकं) 'नर्सप्प' गृहम् आहूय पोषितवती। गृहं परितः परिक्रम्य रक्षणार्थं प्रसिद्धौ दृढशरीरौ सर्पमारणसमर्थौ नियोजितवती। विषप्रतिरोधकानि औषधानि आनायितवती। एकस्मै वैद्याय गृहे प्रकोष्ठव्यवस्थामपि कृतवती।


● तेलुगुमूलम् - जोन्नलगड्ड सुब्रह्मण्यम्

● (अनु) - वि. मुरलीधरः


सप्ताहपर्यन्तम् अहं स्वीयप्राणान् अत्यन्तजागरूकतया रक्षितवान्। बहवः आगत्य सान्त्वनां कुर्वन्ति स्म। मातामही तु नेत्रद्वयम् अश्रुपूर्णं कृत्वा - ''अस्य वंशस्य एषः एव एकः अवशिष्टः। कथम् एषः रक्षणीयः ? ...'' इति वदन्ती बहु रोदिति स्म। प्राङ्गणे स्थितानां सर्वेषां वृक्षाणां च्छेदनं कारितवती सा। बिलं काचकखण्डैः सम्पूर्य पाषाणचूर्णेन निरोधितवती। दिवारात्रं नेत्रद्वयम् उन्मील्य मां रक्षितवती सा।

मातामह्याः अप्रमत्ततायाः कारणेन, मम भाग्येन वा - एकस्मिन् प्रभाते लवणपात्रस्य पार्श्वे वर्तुलाकारेण सुप्तवन्तं सर्पम् एकेनैव आघातेन कर्मकराः मारितवन्तः। अनन्तरं तस्य सर्पस्य मुखे ताम्रनाणकं संस्थाप्य प्राङ्गणे एव दग्धवन्तः। तस्मिन् दिने मातामह्याः सन्तोषः अतुलनीयः। तस्याः नेत्राभ्यां शुद्धमौक्तिकसमानाः आनन्दाश्रुबिन्दवः। दीर्घम् उच्छ्वसितवती सा। तस्यां कश्चन नूतनः उत्साहः, उत्तेजः च दृष्टम्। मम शरीरं नवनीतेन संमर्द्य सा शिरःस्नानं कारितवती। धूपम् आघ्रापितवती च।

तदा ... एकस्मात् सर्पात् मां रक्षितुं मातामही कति क्लेशान् अनुभूतवती ! - परम् इदानीम् अनेकसर्पेभ्यः आत्मनः रक्षणं कथं करणीयम् इति अहं न जानामि।

- २ -

''भवन्तम् अभियन्तृमहोदयः आह्वयन् अस्ति।''

विचारान् निरुध्य अहं शिरः उन्नमय्य दृष्टवान्। अभिमुखं तिष्ठति मङ्गापतिः। मङ्गापतिः धूर्ततायाः मूर्तीभूतः। मन्दस्वरेण भाषणं विषमयहसनं च तस्य स्वभावः।

अहम् अभियन्तुः प्रकोष्ठं प्रविष्टवान्। मां दृष्ट्वा सः दूरभाषणं कुर्वन् एव लेखन्या उपवेष्टुम् आसन्दं दर्शितवान्। अहम् उपविष्टवान्। हृदयं 'राकेट्' वेगेन कम्पते स्म। भीकरज्वालाग्नीनां

**तदा ... एकस्मात् सर्पात् मां रक्षितुं मातामही कति क्लेशान् अनुभूतवती ! - परम् इदानीम् अनेकसर्पेभ्यः आत्मनः रक्षणं कथं करणीयम् इति अहं न जानामि।**

मध्ये लोहसिंहासनोपरि उपविष्टवानिव अनुभूतिः । सप्ताहतः अनुभूयमाना बाधा सा।

''सा पञ्जिका (File) लब्धा वा ?'' मूषिकस्य पृष्ठोपरि पादेन प्रताडितवतः मार्जारस्य परिहसनमिव ... ।

''क्षम्यतां, न लब्धा !''

''क्षम्यताम् इत्युक्त्वा तूष्णीं तिष्ठति चेत् कथं भोः रामनाथवर्य ? ... सः कांट्राक्टर् सम्बद्धमन्त्रिणः समीपं गच्छामि इति भर्त्सयन् अस्ति । तदानीं किं भविष्यतीति; विधानसभायां तस्य बलं कियत् अस्तीति च भवान् जानात्येव।''

तत् अक्षरशः सत्यमेव । प्राथमिकपाठशालायामेव सः महतीं कीर्तिं सम्पादितवान् आसीत् । तस्य प्रत्येकस्मिन् शब्दे विषरागाः श्रूयन्ते। मम पुनः स्थानान्तरणं वा निलम्बनं वा निश्चितमेव । एषः विषयः मया सम्यक् ज्ञायते । किमर्थमिति चेत् सप्ताहात् पूर्वं सा पञ्जिका मम उत्पीठिकाम् आगता आसीत् । अहं तस्यां हस्ताक्षरं न कृतवान् आसम् । कारणं - मम दौर्भाग्यं, बलहीनता वा स्यात् । अथवा प्रतिदिनं नियतरूपेण कुल्यायाः (Canal) समीपतः मम आगमनमपि कारणं स्यात्।

वस्तुतः प्रधानकुल्यायाः (पङ्कादिनिष्कासनमित्यादि) शुद्धीकरणकार्यं तस्मै कांट्राक्टर्-महोदयाय दत्तम् आसीत् । एकमासे व्यतीते अपि कुल्यायाः शुद्धीकरणं तेन न कृतम्। धनार्थं तु पञ्जिका मम समीपम् आगता। अतः एव अहं हस्ताक्षरं न कृतवान्।

एकस्मिन् दिने सः कांट्राक्टर्महाशयः मम गृहम् आगतवान् । अहं तं विषयं स्पष्टतया उक्तवान् - ''पश्यतु ! कुल्यायाः शुद्धीकरणकार्यं भवान् स्वीकृतवान् । तत् समापयतु, ततः धनं स्वीकरोतु। शुद्धीकरणं न करिष्यते चेत् जलं कुल्यायाः उपरिष्टात् गमिष्यति । तेन जलप्रवाहेण, कुल्याम् उभयतः गृहाणि निर्माय निवसन्तः जनाः सर्वे मरिष्यन्ति ।''

सः कांट्राक्टर्-सर्पः एतत् सर्वं जानात्येव। मम वचनं श्रुत्वा सः सर्पः न फूत्कृतवान् । मुखं विवर्णं कृत्वा मन्दं हसन् ततः निर्गतवान्।

तदनन्तरं दिनद्वयं व्यतीतम् । तृतीयदिनतः सा पञ्जिका न दृश्यते । कार्यालये सर्वत्र 'अहमेव अधिकधनलोभेन पञ्जिकाम् अदृश्यां कृतवान्' इति प्रचारः प्रसृतः । ततः आरभ्य प्रतिदिनं अभियन्तृमहोदयः माम् आह्वयति, पीडयति च। श्रोतृभिः अण्डैः पादरक्षाभिश्च सम्मानितः उपन्यासकः वेदिकातः यथा अवतरति तथा अहं प्रतिदिनम् अभियन्तुः प्रकोष्ठतः मम स्थानम् आगच्छामि।

सा पञ्जिका कथम् अदृश्यतां गता, तां कः चोरितवान् ... इत्यादिकं सर्वं दर्पणे मुखमिव अहं स्पष्टतया जानामि । परन्तु निरूपयितुम् आधाराः न सन्ति । मम पृष्ठतः कार्यालयकर्मकरस्य मङ्गापतेः व्यङ्ग्यमयः हासः 'नवनीते मरीचचूर्णं संमिश्र्य मुखे लेपितमिव' बाधते । औषधसूचिकायाम् औषधस्थाने कृमयः नाड्याम् अवतार्यन्ते इव भावना।

फूत्कारम् अकुर्वाणाः सर्पाः । विषपूर्णशरीराः सर्पाः । प्रतिक्षणं कञ्चुकान् परित्यजन्तः सर्पाः । तेषां 'नैतिकानि' जीवनानि। अहं भ्रष्टः मनुष्यः।

- ३ -

गृहद्वारे द्विचक्रिकातः अवतरन् अस्मि । गृहस्य अन्तर्भागतः शारदायाः स्वरः अत्युच्चैः श्रूयते। पुनः किमपि अभवत् इति चिन्तयन् अहं द्विचक्रिकां स्थापयित्वा अन्तः गतवान्।

आहता उरगाङ्गना इव आगतवती शारदा। हस्तं स्वीकृत्य आकर्षन्ती मां प्राङ्गणं नीतवती। तत्र प्रतिदिनं दृश्यमानः कार्यक्रमः एव। तत् दृष्ट्वा वध्यशिलायाम् आरोपितः इव बाधाम् अनुभवामि। गतात् वर्षद्वयात् अयमेव कोलाहलः।

तत्र -

अस्माकं कूपस्य समीपे प्रतिवेशिभिः प्रक्षिप्ताः मत्स्यखण्डाः अस्थीनि च । तान् परितः भ्रमन्तः कृमयः । तान् खादितुं वातामवृक्षोपरि एकत्रितानां काकानां 'काव् काव्' रवाः । भित्तिम् उल्लङ्घ्य आगच्छतां वीथीशुनकानां 'भौ भौ' भषणानि । विमानयन्त्रस्य शब्दः इव झुङ्कारं कुर्वाणाः मक्षिकाः।

''प्राङ्गणे पदार्थान् शुष्कयितुमेव भयम्। तत्र उच्छिष्टे चञ्चः स्थापयित्वा काकाः अत्र पदार्थान् खादन्ति। आमासम् उपयोक्तुं परह्यः आनीतं गोधूमपिष्टं सर्वमपि बहिः प्रक्षिप्तवती। ह्यः शुष्कयितुं स्थापितेषु अपूपेषु कुक्कुटानाम् अस्थीनि आसन्। गत्यन्तरं विना तान् बहिः प्रक्षिप्य शिरःस्नानं करणीयं भवति'' - शारदा दुःखितवती।

शारदायाः पद्धतिरेव तादृशी । अहमपि तथैव । परन्तु अहं किञ्चित् गाम्भीर्यं प्रदर्शयामि । परह्यः भोजने परिवेषिते वास्तुकचोष्ये कुक्कुटपादस्य अस्थि आगतम्। 'शिग्रुखण्डम्' इति शारदाम् असत्यम् उक्तवान् अहम्, अनन्तरं स्नानकक्षं गत्वा वमनं कृतवान्।

अस्माकं प्राङ्गणे - विमृश्य व्यर्थपदार्थानां प्रक्षेपणे तेषाम् आन्तर्यं किमिति अहं जानामि। वयं दुःखं प्राप्य गृहं विक्रीय गच्छेम इति, स्वकीयाः तत्र आगच्छेयुः इति च। ग्रामे स्थितां षड्-एकर्-परिमितां भूमिं, बृहद्गृहं च विक्रीय अवशिष्टनाणकैः एतत् गृहं निर्मितवान् अहम्। पित्रार्जितमित्येव भावयामि। अतः एव ममकारः न म्रियते। विक्रीय अन्यत्र गन्तुं मनः न अङ्गीकरोति। अतः एव सर्वं सहे।

सन्तप्य सन्तप्य वयं म्रियेमहि चेदपि ते सान्त्वनार्थमपि किमपि न वदन्ति । न्यूनातिन्यूनतया 'अहो ! बत !' इत्यपि न चिन्तयन्ति। ''वयं किमर्थं प्रक्षिपामः श्रीमन्! काकानां कार्यम् एतत्'' इति वदन्ति । प्राङ्गणस्य भित्तितः झटिति प्रक्षिपन्ति। यदि कलहं कुर्मः तर्हि ''भवन्तः यत् कर्तुं शक्नुवन्ति तत् कुर्वन्तु'' इति वदन्ति।

अनेन न समाप्तम्। एकवारं वर्णं धर्मं च निमित्तीकृत्य वयं निन्दतवन्तः इति रक्षकभटस्थाने अभियोगं कृतवन्तः ते। अन्ते अहं सार्धैकशत-रूप्यकाणाम् उत्कोचं दत्त्वा सायङ्काले रक्षकभटनिलयतः बहिरागतवान्।

शारदा संमार्जन्या तत्सर्वं निष्कास्य वीथ्याः अवकरकुण्डे प्रक्षिप्य आगतवती इव भाति । संमार्जनीं प्रक्षाल्य कूपसमीपे शिरःस्नानं कुर्वती अस्ति सा ।

अत्र विषपूर्णशरीरः मृदुसर्पः। फूत्कारम् अकुर्वाणः सर्पः। प्रतिक्षणं कञ्चुकं परित्यजन् अस्ति विचित्रसर्पः । धूर्ततासर्पं कण्ठे अलङ्कृतवन्तः गरलकण्ठाः एते।

कङ्कणशब्दं श्रुत्वा अहं शिरः उन्नमय्य दृष्टवान् । पाकशालायाः द्वारे शाटिकां

समीकुर्वती शारदा 'सः इदानीं यावत् न आगतवान्' इति उक्तवती । भित्तिघटी षड्घण्टाः नादितवती ।

सः नाम मम पुत्ररत्नम् । एतावता सः आगतः । तस्य शिरः सर्वं रक्तवर्णरञ्जितं नारिकेलफलमिव अस्ति । 'पुनः किम् अभवत् रे ?' - शारदा चीत्कारं कृत्वा एकेन एव पदस्थापनेन तस्य समीपं गतवती । कुत्रचित् कस्यचित् हननं कृत्वा साक्षात् गृहमागतवतः इव अस्ति तस्य व्यवहारः । हस्तौ, वस्त्राणि च रक्तेन आर्द्राणि । सन्ध्यासमये मन्दप्रकाशे भूतमान्त्रिकः इव दृश्यते सः ।

'किमभवत् रे ?' शारदा स्वरम् उच्चैः कृतवती ।

'किम् ? न दृश्यते वा ?' - कोपेन उक्त्वा सः स्नानकक्षं प्रविष्टवान् ।

''अहं सोढुं न शक्नोमि । एताभिः परिस्थितिभिः सह समञ्जनं कर्तुं न शक्नोमि'' - शारदा रुदती स्वललाटं ताडितवती ।

अर्धहोरानन्तरं स्नानकक्षतः बहिः आगतवान् सः उत्पीठिकायाः पुरतः उपविश्य पुस्तकानि स्वीकुर्वन् अस्ति । शारदा पाकशालायाः भित्तिम् आधारीकृत्य उपविष्टवती । आसन्दे अहम् । त्रिकोणाकारः इव — विक्रमार्कस्य सिंहासने सालभञ्जिकाः इव उपविष्टवन्तः आस्म वयम् । विद्युत् अन्धकारं खादन्ती अस्ति ।

'किम् अभवत् रे ? किमपि अनुक्त्वा भित्तौ स्थापिता आणिः इव किमर्थम् उपविष्टः भवान् ?' - शारदा क्रन्दनं कृतवती ।

''किं वक्तव्यम् ? वदतु ! एषः दोषः भवताम् एव इति वदामि वा ? अथवा आदर्शान् शिक्षयतां पुराणानाम् इति वदामि वा ?'' - सः कोपं प्रदर्शितवान् ।

'यत् प्रवृत्तं तत् सम्यक् वदतु' - शारदायाः निन्दनानि ।

''प्राचीने काले जिजियाबायी शिवाजीवर्यम् अङ्के उपवेश्य रामायण-भारतादीन् पाठितवती । शिवाजीवर्यम् आदर्शपुरुषं कृतवती इति चेत् तत्कालिक्यः परिस्थितयः अन्याः । सः धार्मिककालः । परम् इदानीम् अधार्मिककालः । धर्मराजः इव अस्मीति कृत्वा हरिश्चन्द्रः इव सत्यम् उक्तवान् इति कारणतः श्रीरामः इव वचनं पालितवान् इति हेतोः - एतत् प्रतिफलम् अनुभवामि । परीक्षाप्रकोष्ठे पृष्ठभागे उपविष्टः गोविन्दः - 'उत्तरपत्रं प्रदर्शयतु' इति उक्तवान् । अहं न प्रदर्शितवान् । तस्य फलम् एतत् । मार्गे मां निर्बध्य अन्यैः ताडितवान् सः ।''

''रक्षकभटनिलये अभियोगः दातव्यः आसीत् ।''

''कस्य उपरि अम्ब ? के ताडितवन्तः इति अहं न जानामि खलु !'' - उद्रेकेण वदति पुत्ररत्नम् ।

अत्रापि विषसर्पः । धूर्ततामयशरीरः उरगः । फूत्कारम् अकुर्वन् एव रक्तस्पर्शं विनैव दशति एषः सर्पः ।

भोजनं समाप्तम् । पाकशालां स्वच्छीकरोति शारदा । अहं शय्यायां शयानः पूर्वं कदाचित् क्रीतं पुस्तकम् उद्घाटितवान् । तत् 'भारतीयसंविधाने नागरिकाणां कर्तव्यानि, प्राथमिकाधिकाराश्च'' इत्यस्य संस्कृतानुवादः ।

पुस्तक-जीवनयोः मध्ये सामञ्जस्यं नास्ति । तत्र तत्र पुस्तकं ये खादितवन्तः ते कृमयः किमपि सारं जीर्णीकृतवन्तः स्युः - अहं न जानामि ।

शारदा कदा सुप्तवतीति अहं न जानामि । अर्धरात्रे द्वारस्य प्रहरणं श्रुत्वा उत्थाय अहं दीपं प्रज्वाल्य द्वारम् उद्घाटितवान् । पुरतः मम पुत्री जामाता च ।

जीर्णं मन्दारपुष्पमिव अस्ति पुत्री । जामाता अन्तः अपि न आगतवान् । पादावपि न प्रक्षालितवान् । जलमपि न पीतवान् । अवकाशः नास्तीति भित्तिम् उक्तवानिव उक्त्वा तदानीमेव प्रस्थितवान् ।

सा रात्रिः अस्माकं कृते कालरात्रिः अभवत् । शारदायाः हृदयं भग्नम् । पुत्रीविषये तया उक्तस्य श्रवणात् आरभ्य नवरन्ध्रेषु कृष्णमरीचकषायः पूरितः इव अस्ति ।

- ४ -

प्रतिदिवसमिव प्रभातः अभवत् । सर्पाः मृगयार्थं प्रस्थिताः । मादृशानां मण्डूकानां बेकबेकारवाः प्रारब्धाः ।

अहं कार्यालयं गतवान् । मम मित्रं सत्यनारायणः मम निलम्बनादेशं (Order of suspension) दत्तवान् । अहं मन्दहासेन स्वीकृतवान् । उपाहारपात्रं पुनः द्विचक्रिकायाः उपरि संस्थाप्य यदा गन्तुम् अहम् उद्युक्तः तदा सत्यनारायणः मम भुजोपरि सहानुभूत्या हस्तं संस्थाप्य - ''अद्य नास्ति चेत् श्वः, दशवर्षानन्तरं वा भवतः न्यायबद्धतां सर्वकारः अभिज्ञास्यति । पुनः भवतः सुदिवसाः आगच्छेयुः इति मम विश्वासः । न्यायालयं प्रति गमनं मा विस्मरतु'' - इत्युक्तवान् । सः कश्चन विचित्रमनुष्यः । आत्मानं महाकविं चिन्तयति सः ।

कुरु कुरु युद्धम् आन्तं यावत्<br>
घनीभवतु रुधिरम् ।<br>
खड्गः तिष्ठतु कण्ठस्योपरि<br>
मा जहीहि धैर्यम् ॥<br>
कुरु कुरु युद्धम् आन्तं यावत् ।

लयबद्धतया सः गीतवान् ।

तदेकं सान्त्वनम् । तीव्रातपे शीतांशुरेखा इव । किञ्चित् विश्रान्तिः । महतः विश्वासस्य आधारः । मया ज्ञायते । न्यायालयः गम्यते चेत् दश वर्षाणि अपेक्षितानि भवेयुः । मम जीवनकालः सर्वोऽपि अपेक्षितः स्यात् । तदनन्तरं किमपि भवितुमर्हति । तावत्पर्यन्तं किं वा करणीयम् ? इदानीम् एव विषमये मार्गे गच्छत् जीवनशकटं युद्धे कर्णस्य रथचक्रमिव भूमिं प्रविशत् अस्ति । इदानीं यावत् जीवनमार्गे सम्मुखीकृतानि कण्टकानि श्वः आणयः खड्गाश्च भूत्वा क्लेशवलये मां संस्थाप्य छिद्रीकुर्वन्ति ।

शारदा रुदती अस्ति । एतादृशं पतिं, तादृशं पुत्रं च दत्तवन्तं भगवन्तं शपन्ती अस्ति ।

रात्रिः अभवत् । मनसि अन्धकारः व्याप्तः । अन्धकारच्छाया इव मिलितः राजारामः । आगमनसमनन्तरमेव ''अहम् एकं परामर्शं दातुम् इच्छामि रामनाथ !'' इति उक्तवान् ।

''कः परामर्शः ?'' - अहं निर्लिप्ततया पृष्टवान् ।

''अन्यथा मा चिन्तयतु । धर्मे विश्वस्य रामः, सत्यवचनेन बद्धः हरिश्चन्द्रः च अरण्यानि प्राप्तवन्तौ । तथाऽपि ते दिवसाः अन्ये । अरण्येषु खादनार्थं तैः कन्दमूलादीनि लब्धानि । परम् अस्माकं तथा नास्ति खलु ! भार्यापुत्रादीन् स्वीकृत्य किम् अरण्यं गच्छेम ?

इदानीम् अरण्येषु कन्दमूलान्यपि न लभ्यन्ते। वस्तुतः अरण्यान्येव न दृश्यन्ते। जनारण्यानि एव गतिः। प्रियतमया सूचिकया नेत्रयोः वेधनम् अविवेकाय भवति। यदि भवान् 'आम्' इति वदति तर्हि प्रभाते आगमिष्यामि। कांट्राक्टर्वर्यस्य गृहं गच्छाव। तत्र 'क्षम्यताम्' इति अक्षरत्रयं वदतु, पर्याप्तम्...।''

सकृत् वशीभूतायाः स्त्रियाः उपरि सर्वाधिकारं प्राप्नोति पुरुषः। अहं जानामि।

''अस्तु 'क्षम्यताम्' इति वक्ष्यामि'' इत्युक्तवान् अहम्। स्वीयमुखम् आम्रफलवर्णेन परिवर्त्य गतवान् राजारामः। सर्वे सर्पाः शिरांसि उन्नमितवन्तः इति दृष्ट्वा वृष्टिसर्पोऽपि स्वीयशिरः उन्नमितवान्। नो चेत् एषः राजारामः - मह्यं परामर्शं ददाति वा ? तस्य व्यवहारं को वा न जानाति ? अधिकारिणां पादरक्षाणां परिष्करणं, तेषां शुनकानां भ्रामणं, तेषां युतकानां कुड्मलसीवनम् - सः सर्वमपि करोति। तस्य मुष्टिसीमितं मनस्तत्त्वम्, मुष्टिसीमितं जीवनं च।

- ५ -

कांट्राक्टर्वर्यः वैभवेन स्वागतं कृतवान्। ''बहुकालानन्तरं भवताम् आगमनम्'' इत्युक्त्वा सविनयम् आसन्दं प्रदर्शितवान्। 'भवति नं विश्वसिमि चेत् अहम् आत्मनि एव न विश्वसिमि इत्यर्थः श्रीमन्!'' ..... इत्यादि फूत्कारान् कृतवान्। सर्वाः पञ्जिकाः स्वीकृत्य नमस्कृत्य बहुजागरूकतया अयःपेटिकायां स्थापितवान्। कोषान् सभारान् कृत्वा मां प्रेषितवन्।

अहं तं भारं शारदायाः हस्ते निक्षिप्तवान्। सा पुत्रिकायाः हस्ते निक्षिप्य विश्रान्तिं प्राप्तवती। पुत्रिकायाः नेत्रद्वये नीलोत्पलानि विकसितानि। आनन्देन किमपि भुक्त्वा उत्थितवती सा। मम तु पुलाकाऽपि कण्ठतः अधः न गता बाधया, शारदायाः अपि तथैव वेदनया। तदैव पुत्रिका गन्तुमुद्युक्ता। शारदा सहैव गत्वा तां प्रापय्य सायङ्काले प्रत्यागतवती।

परेद्युः शारदा काफीं ददती उक्तवती - ''जामातुः प्रोत्साहेन न, परम् एषैव हठेन आगतवती इति भाति। व्यूहः सर्वोऽपि अस्याः एव स्यात्'' इति।

अहं निर्लिप्ततया हसितवान्। दंशनचिह्नं विना दशन्तः सन्ति सर्पाः। अत्र अस्ति तत्र नास्तीति न। यत्र यत्र अन्विष्याम: तत्र तत्र धूर्ततासर्पः! विषादरागः गेयः इति मनसि भावना।

अहं शनैः शारदाम् विषयम् उक्तवान्। एकस्योपरि एकमिति क्रमेण स्थापितानि ताम्रपात्राणि अधः पतन्ति यथा शब्दं कुर्वन्ति तथा रुदितवती शारदा। रुदती एव सा सगद्गदम् उक्तवती - ''वृक्षच्छायासु जीवननिर्वाहं कुर्वाणानाम्, अस्माकं च मध्ये अन्तरमेव नास्ति। राज्ये तादृशग्रामः प्रायः नास्ति, यत्र अस्माकं स्थानान्तरणं न अभवत्। नियतरूपेण एकवर्षं कुत्रापि न निवसितवन्तः वयम्। इदानीं तत् दुःखमपि नास्ति।''

तदा आगता शङ्करतः तन्त्रीवार्ता - I hate you इति, भवता गम्यमानः मार्गः मह्यं सर्वथा न रोचते इति च। शङ्करः शारदायाः भ्राता।

सः द्वाभ्यां हस्ताभ्यां सम्यक् अर्जयन् अस्ति। कारणं न जानामि। तथा जीवितुं मम इच्छैव न भवति। अतः एव शुभकार्यार्थम् अपि अहं न तस्य गृहं गच्छामि। शारदा अपत्यैः सह गत्वा आगच्छति। ततः - तेषाम् आगमनात् आरभ्य द्वित्रदिनानि मनसि अनिर्वचनीयवेदना भवति। कम्बलकृमिः इव सङ्कुचितो भवामि। खड्गेन सह मैत्रीं कृतवानिव भावयामि।

सप्ताहः अतीतः। एकस्यां रात्रौ हठात् शङ्करः आगतवान्। सर्वमपि अखण्डभूमण्डलं स्वाशेष-शेमुषी-विभवेन पालयन् मन्त्री इव उपन्यासं प्रारब्धवान्। ''मम बाधाः अहम् अनुभूतवान्। पादौ गृहीतवान् वा, हस्तौ गृहीतवान् वा ...। तत्सर्वं भवते न आवश्यकम्। श्वः आरभ्य कार्यालयं गच्छतु। अभियन्ता किमपि न वक्ष्यति। कांट्राक्टर् भवतः समीपं नागमिष्यति। श्वः वा परश्वः वा भवान् पितामहः भविष्यति। अतः बाल्यचेष्टाः त्यजतु। अन्याय्येन वा रहस्येन वा कानिचन रूप्यकाणि एकत्रीकरोतु। इच्छा नास्ति चेत् भवतः दौर्भाग्यं, मम भगिन्याः दौर्भाग्यम्। सर्वे नैष्ठिकाः भवितुम् इच्छन्ति चेत् कथम्? ... भवतः मार्गं परिवर्तयतु।''

इतोऽपि बहु भाषित्वा एकघण्टानन्तरं सः कार्यानेन धावितवान्। शारदाविषये कोपः आगतः। परं मम क्रोधः शारदां किमपि कर्तुं न शक्नोति। शारदायाः दशाङ्गुल्यः अपि दृढाः। मां खड्गस्य अग्रभागे अपसार्य ते आनन्दम् अनुभवन्तः सन्ति। गच्छता शङ्करेण उक्तानि वचनानि कर्णद्वये ध्वनिं कुर्वन्ति सन्ति - ''सामान्याः वृष्टिसर्पाः महाभुजङ्गं सम्मुखीकुर्वन्ति चेत् यथा भवति तथैव भवतः पद्धतिरपि अस्ति।''

मातामह्याः विषये प्रथमवारं क्रोधः आगतः। तस्मिन् दिने ... पुच्छोपरि पादं स्थापितवानिति कारणेन क्रुद्धात् विषसर्पात् मां संरक्ष्य एतेषां सर्पाणां मध्ये मां प्रक्षिप्तवतीति कृत्वा।

- ६ -

अहं कार्यालयं न गतवानेव। शारदा प्रलपन्ती एव अस्ति। सायङ्कालपर्यन्तं विचिन्त्य अहं स्वकर्तव्यं निर्णीतवान्।

मम हस्तद्वये माषदालं, तण्डुलचूर्णादिकं च दृष्ट्वा शारदा स्तब्धा।

''किम् इड्ली-वडादीन् विक्रीय जीवनयापनं वा?'' दुःखेन पृष्टवती सा।

''आम्! स्वतन्त्रजीवने कः दोषः? श्रमजीविनः विषये सर्वदा लक्ष्मीकटाक्षः इति श्रूयते।''

ततः दिनद्वयानन्तरम् -

शङ्करात् दूरभाषणम् आगतम्। ''अवमानजनकानि कार्याणि मा करोतु। आवश्यकं चेत् भवतः अहं भोजयामि'' इति।

सः एकः विषसर्पपरिष्वङ्गः। सर्वं दुःखमयं भाति। शिरः भग्नमिव। काकतालीयन्यायेन अहं दर्पणस्य पुरतः गत्वा स्थितवान्। आश्चर्यम्! दर्पणे मम प्रतिबिम्बं न दृश्यते। तस्य स्थाने भयङ्करनेत्रः मुसलोन्नतः सर्पः विन्यासान् कुर्वन् अस्ति।

सः सर्पः कः इति अहं ज्ञातवान्।

सः मम ''स्वाभिमानः''।

एतादृशस्य उन्नतसर्पस्य पुरतः अवशिष्टाः सर्वेऽपि वृष्टिसर्पाः इति भान्ति। ●



# निकषोपलः १०

● जि. महाबलेश्वर भट्टः

## शब्दज्ञानवतां परीक्षास्थलम्, अन्येषां शब्दसङ्ग्रहमूलम्

*अत्र प्रतिमासं चतुर्दश शब्दाः दीयन्ते। एकैकस्य अपि शब्दस्य चत्वारः अर्थाः लिख्यन्ते। चतुर्षु एकतमः एव अर्थः साधुः भवति। कतमः तत्र साधुः अर्थः इति एतस्य पत्रस्य पृष्ठभागे एव उदाहरणसहितं निरूपितम् अस्ति। आदौ तावत् भवन्तः अन्यतमम् अर्थं विचिन्त्य निर्वाचयन्तु। ततः पृष्ठभागं पश्यन्तु।*

१. **अस्तेयम् (न)**
(अ) अस्तं गतम् (आ) अतदीयम्
(इ) अचौर्यम् (ई) अस्तित्वम्

२. **विभवः (पुं)**
(अ) शिवः (आ) धनम् (इ) प्रभुः
(ई) कान्तिः

३. **आसन्नः (वि)**
(अ) समीपे स्थितः (आ) सिद्धः
(इ) उत्पन्नः (ई) विद्यमानः

४. **अवज्ञा (स्त्री)**
(अ) अवगतिः (आ) रक्षणेच्छा
(इ) अनादरः (ई) परिज्ञानम्

५. **व्यवसायी (वि)**
(अ) कृषिकः (आ) प्रयत्नशीलः
(इ) नाशोन्मुखः (ई) उद्यमः

६. **पूतम् (वि)**
(अ) शुद्धीकृतम् (आ) रक्षितम्
(इ) तन्तुसंयोजनम्
(ई) विस्तृतम्

७. **मुखरः (पुं)**
(अ) अग्रणीः (आ) ध्वनिः
(इ) जिह्वादोषः (ई) मुखस्य व्यादानम्।

८. **गलितम् (वि)**
(अ) गीर्णम् (आ) परिपक्वम्
(इ) विदीर्णम् (ई) कण्ठे संलग्नम्

९. **सिन्धुः (पुं)**
(अ) सिन्दूरम् (आ) सिद्धिः
(इ) बिन्दुः (ई) सागरः

१०. **लोष्टम् (न)**
(अ) काष्ठम् (आ) मृत्पिण्डः
(इ) लोहम् (ई) अष्टभिः युक्तम्

११. **नूपुरम् (पुं, न)**
(अ) मञ्जीरः (आ) नूतननगरम्
(इ) नगरम् (ई) पुरभिन्नम्

१२. **अम्भः (न)**
(अ) समुद्रः (आ) जलम्
(इ) मेघः (ई) अम्बा

१३. **खलः (पुं)**
(अ) खगः (आ) खरः (इ) दुष्टः
(ई) राक्षसः

१४. **व्रीडा (स्त्री)**
(अ) क्रीडा (आ) लीला
(इ) नीडम् (ई) लज्जा

### भाषा

## स्वभावः शब्दानाम्

शब्दानां स्वभावः आश्चर्यं जनयति। अतः परिशीलनार्हः भवति शब्दानां स्वभावः। तथा हि -

१. गोष्ठम् - गावः यत्र तिष्ठन्ति, तद् गोष्ठम्। गवां बन्धनस्थानमित्यर्थः। गोष्ठशब्दः एषः गोबन्धनस्थानार्थे शिष्टैः प्रयुज्यमानः आसीत्। गच्छति काले, अविगोष्ठं महिषीगोष्ठम् इत्यादयः प्रयोगाः अपि श्रुताः, शिष्टैः परिगृहीताश्च। अवीनां (अजानां) बन्धनस्थानं, महिषीणां बन्धनस्थानमिति तयोः क्रमशः अर्थः। उभयत्रापि गोष्ठशब्दः पशुबन्धनस्थानार्थ-प्रतिपादकः, न तु गोबन्धस्थानार्थकः। अतः सम्प्रति गोष्ठशब्दः केवलपशु-बन्धनस्थानार्थे रूढः। अत एव गोगोष्ठमिति प्रयोगोऽपि साधुरेव, अन्यथा गोशब्दस्य द्विरुक्तता स्यात्। गवां गोष्ठं (=बन्धनस्थानं) गोगोष्ठमिति विग्रहः।

२. गोयुगम् - गवोः युगं = गोयुगम्। कर्षणे हलादौ, वहने शकटादौ च गवोः युगं (द्वन्द्वं) नियोजयन्ति जनाः। एतादृशक्रियायां युगलव्यवहारं पश्यन् लोकः, गच्छता कालेन खरगोयुगम्, उष्ट्रगोयुगमिति प्रयोगम् अकरोत्। खरयोः युगम्, उष्ट्रयोः युगमिति तयोः क्रमशः अर्थः। उभयत्रापि गोयुगशब्दः केवलयुगार्थकः, न तु गवोः युगमित्यर्थ-प्रतिपादकः।

गोष्ठशब्दे गोयुगशब्दे च श्रूयमाणः गोशब्दः स्वीयमर्थं न बोधयतीति तु न आश्चर्यावहम्। किन्तु इमे द्वे अपि प्रातिपदिके प्रत्ययतां गते वार्तिककारमते इति तु विस्मयं जनयति। अविगोष्ठमित्यत्र अविः प्रकृतिः, गोष्ठः प्रत्ययः। उष्ट्रगोयुगमित्यत्र उष्ट्रः प्रकृतिः, गोयुगः प्रत्ययः।

एवं केचन शब्दाः स्वीयम् अर्थं परित्यजन्ति इति, कालान्तरे ते एव प्रत्ययत्वं प्राप्नुवन्ति इति तु नितराम् आश्चर्यकरम्। एतादृशं परिवर्तनं भाषायाः प्रवाहशीलतां खलु द्योतयति?

(गोष्ठजादयः स्थानादिषु पशु-नामादिभ्यः। गोयुगशब्दश्च प्रत्ययो वक्तव्यः। - वार्तिकम् - ५.२.२९)

# एषः निर्णयः .....

१. **अस्तेयम् =** (इ) अचौर्यम्। स्तेयम् = चौर्यम्। न स्तेयम् = अस्तेयम्।

उदा - १. अहिंसा सत्यम् अस्तेयं शौचम् इन्द्रियनिग्रहः। (मनुस्मृतिः - १०.६३)

२. अस्तेयं परमं व्रतं भवेत्।

२. **विभवः =** (आ) धनम्। 'हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि।' (अमरः)

उदा - १. अनित्यानि शरीराणि विभवो नैव शाश्वतः। (सुभाषितम्)

२. विभवः सर्वेषां कार्याणां मूलं, किन्तु विभवासक्तो न भवेत्।

३. **आसन्नः =** (अ) समीपे स्थितः। 'समीपे निकटासन्नसन्निकृष्टसनीडवत्।' (अमरः)

उदा - १. अत्यासन्नेऽतिदूरे च अत्याढ्ये चातिदुर्बले।

२. वत्स! क्षणं तिष्ठ, आसन्नं नगरम्।

४. **अवज्ञा =** (इ) अनादरः। 'अनादरः परिभवः ... । रीढावमाननावज्ञावहेलनमसूक्ष्मणम्।' (अमरः)

उदा - १. अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति।

२. सर्वत्र अवज्ञा महते अनर्थाय।

५. **व्यवसायी =** (आ) प्रयत्नशीलः। व्यवसायः अस्य अस्तीति = व्यवसायी। व्यवसायः = प्रयत्नः।

उदा - १. कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम्। (चाणक्यनीतिः)

२. व्यवसायी ऊर्ध्वोर्ध्वं गच्छति।

६. **पूतम् =** (अ) शुद्धीकृतम्। पूङ् = पवने। तस्मात् क्तप्रत्ययः।

उदा - १. दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम्। (मनुस्मृतिः - ६.४६)

२. इमे व्रीहयः पूताः सन्ति।

७. **मुखरः =** (अ) अग्रणीः। मुखं = मुख्यं कार्यं राति इति = मुखरः।

उदा - १. यदि कार्यविपत्तिः स्यात् मुखरस्तत्र हन्यते। (हितोपदेशः - १.२९)

२. बहवः आत्मानं मुखरं मन्यन्ते।

८. **गलितम् =** (आ) परिपक्वम्। गल = प्रस्रवणे। तस्मात् कर्तरि क्तप्रत्ययः।

उदा - १. अङ्गं गलितं, पलितं मुण्डम्। (चर्पटपञ्चरिकास्तोत्रम्)

२. रुग्णस्य तस्य अङ्गानि गलितानि इव सन्ति।

९. **सिन्धुः =** (ई) सागरः। 'उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः।' (अमरः)

उदा - १. भारतञ्चेक्षुदण्डञ्च सिन्धुमिन्दुं च वर्णय। (सुभाषितरत्नभाण्डागारम्)

२. सप्त सिन्धवः सन्तीति श्रूयते।

१०. **लोष्टम् =** (आ) मृत्पिण्डः। ''लोष्टानि लेष्टवः पुंसि।'' (अमरः)

उदा - १. मातृवत्परदारेषु परद्रव्येषु लोष्टवत्। (सुभाषितम्)

२. रे माणवक! मा क्षिपतु लोष्टम्।

११. **नूपुरम् =** (अ) मञ्जीरः। 'पादाङ्गदं तुलाकोटिः मञ्जीरो नूपुरोऽस्त्रियाम्।' (अमरः)

उदा - १. नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात्। (वाल्मीकिरामायणम्)

२. अयि! बाले! पश्य, नूपुरमेकं पतद् अस्ति।

१२. **अम्भः =** (आ) जलम्। 'अम्भोर्णस्तोयपानीयनीर-क्षीराम्बुशम्बरम्।' (अमरः)

उदा - १. पिबन्ति नद्यः स्वयमेव नाम्भः। (सुभाषितम्)

२. अम्भसि पतितं तैलं झटिति सर्वत्र प्रसरति।

१३. **खलः =** (इ) दुष्टः। 'कर्णेजपः सूचकः स्यात् पिशुनो दुर्जनः खलः।' (अमरः)

उदा - १. सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः। (सुभाषितम्)

२. दूरत एव वर्जनीयः खलः।

१४. **व्रीडा =** (ई) लज्जा। 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा।' (अमरः)

उदा - १. व्रीडा चेत् किमु भूषणैः, सुकविता यद्यस्ति राज्येन किम्। (नीतिशतकम्)

२. अकृत्यं कृत्वापि व्रीडां नानुभवन्ति दुर्जनाः।

## परीक्षापरिणामः

*निर्वाचितस्य एकैकस्य साधुशब्दार्थस्य एकैकः अङ्कः। स्वयमात्मा परीक्ष्यताम्। आहत्य चतुर्दश अङ्काः। भवन्तः श्रेणीं स्वयं निश्चिन्वन्तु।*

| | | |
|---|---|---|
| १२ - १४ | अङ्काः - | प्रथमश्रेणी |
| ०९ - ११ | अङ्काः - | द्वितीयश्रेणी |
| ०६ - ०८ | अङ्काः - | तृतीयश्रेणी |




# कलिपुरुषस्य निग्रहः

● सुधा, मद्रास्

परीक्षिद्राजः अर्जुनस्य पौत्रः। सः अभिमन्योः पुत्रः। पाण्डवानां महाप्रस्थानस्य अनन्तरं परीक्षित् राजा जातः। सः पण्डितः विवेकी च आसीत्। प्रजानां क्षेमार्थं सः बहूनि कार्याणि अकरोत्।

कदाचित् राजा मृगयार्थम् अरण्यं गतवान् आसीत्। तत्समये सः सरस्वतीनदीतीरे राजवेषं धृतवन्तं कश्चित् दुष्टं पुरुषं दृष्टवान्। स च दुष्टः पुरुषः, एकेन एव पादेन तिष्ठन्तम् एकं श्वेतवृषभं दण्डेन प्रहरन् आसीत्। तस्य पार्श्वे एका साध्वी धेनुः आसीत्। तस्याः नेत्राभ्याम् अश्रूणि स्रवन्ति स्म।

एतत् दृष्ट्वा कुपितः राजा तस्य पुरुषस्य समीपं गत्वा - ''भोः, किमर्थम् एतं वृषभं पीडयति भवान्? अहम् एतस्य देशस्य राजा अस्मि। मम शासने, विना कारणं कस्यापिं पीडनार्थं नास्ति अधिकारः'' इति उक्तवान्।

ततः सः वृषभं पश्यन् पृष्टवान् - ''कथं भवतः त्रयाणां पादानां नाशः अभवत्? एतादृशं कष्टं किमर्थं भवतः?'' इति।

तदा वृषभः अवदत् - ''मम एतस्य कष्टस्य कारणं किं स्यात् इति भवान् एव ऊहां करोतु। केचन वदन्ति - इन्द्रियाणां कारणतः कष्टानि इति। पुनः केचन वदन्ति - पूर्वजन्मनः कर्मणां कारणतः कष्टानि इति। अन्ये केचन दैवकारणतः इति वदन्ति। अत्र किं सत्यम् इति अहं न जानामि। कृपया भवान् एव विचिन्त्य वदतु'' इति।

परीक्षित् किञ्चित्कालं चिन्तनं कृतवान्। सम्यक् चिन्तनात् सः ज्ञातवान् - 'एषः वृषभरूपः साक्षात् धर्मः एव। तपः, सच्चारित्र्यं, दया, सत्यं चेति धर्मस्य चत्वारः पादाः। तपसः, सच्चारित्र्यस्य, दयायाः च नाशात्



इदानीं सत्यरूपः पादः एकः एव अवशिष्टः अस्ति। अधर्मस्य आश्रयभूतः कलिः एव एषः दुष्टः पुरुषः। एषः धर्मस्य सत्यरूपं पादम् अपि भञ्जयितुं प्रयत्नं कुर्वन् अस्ति। पार्श्वे या धेनुः अस्ति सा भूदेवी। अधर्मस्य पीडाम् असहमाना सा रोदनं करोति' इति।

अनन्तरं सः धर्मं भूदेवीं च उद्दिश्य - ''भीतिः मास्तु भवतोः' इति उक्त्वा तयोः सान्त्वनं कृतवान्। ततः तीक्ष्णं खड्गं कोषात् आकृष्य कलिं संहर्तुम् उद्युक्तः अभवत् च।

एतत् दृष्ट्वा भीत्या कम्पमानः कलिपुरुषः परीक्षिद्राजस्य पादौ गृहीत्वा क्षमां याचमानः शरणं गतवान्। शरणागतस्य संहारं कर्तुम् अनिच्छन् परीक्षित् - ''यद्यपि शरणं गच्छन् भवान् स्वस्य प्राणान् रक्षितवान्, तथापि अधर्मबन्धुः भवान् मम राज्ये न तिष्ठेत्। निर्गच्छतु भवान् इतः'' इति आदिष्टवान्।

तदा कलिपुरुषः - ''महाराज! भवतः आज्ञां शिरसा पालयामि। किन्तु, समग्रं भूमण्डलम् एव भवतः राज्यम्। एवं स्थिते मम वासः कुत्र वा स्यात्? यथाकथञ्चित् मया अपि कुत्रापि वासः तु करणीयः एव खलु? अतः यत्र अधर्मः, द्यूतं, मद्यपानं, हिंसा, असत्यं, मदः, वैरम् इत्यादयः भवन्ति तत्र वा मम वासार्थम् अनुज्ञां ददातु'' इति प्रार्थितवान्।

एतस्य कारणतः धर्मादीनां हानिः न भवति इत्यतः परीक्षित् एतत् अङ्गीकृतवान्।

अतः एव इदानीं पण्डिताः वदन्ति - 'यत्र अधर्म-द्वेष-हिंसादयः भवन्ति तत्र कलिपुरुषः निवसति' इति। ●

# बुभुक्षायाः निवारणम्

● (सं) विद्यावती

भगवान् बुद्धः शिष्यैः सह देशसञ्चारं कुर्वन् जनान् नीतिं बोधयति स्म। कदाचित् वृष्टेः अभावतः श्रावस्तीपरिसरे महान् क्षामः उद्भूतः। राजा यद्यपि क्षामनिवारणार्थम् आहाराभावसमस्यां परिहर्तुं च यथाशक्ति प्रयत्नं कुर्वन् आसीत्, तथापि क्षामस्य पीडया जनाः कष्टम् अनुभवन्तः एव आसन्।

भगवान् बुद्धः देशस्य एतां परिस्थितिं दृष्ट्वा नितरां खिन्नः। क्षामपीडापरिहारार्थं किमपि करणीयम् इति निश्चित्य सः प्रमुखान् कांश्चित् मेलितवान्। देशस्य स्थितिं निवेद्य, करणीयस्य कार्यस्य महत्त्वं चापि वर्णयित्वा सः पृष्टवान् - "भवत्सु कः निर्धनानां बुभुक्षां निवारयितुं शक्नोति?" इति।



क्षणकालं सभायां मौनं व्याप्तम्। सर्वे परस्परं मुखं पश्यन्तः उपविष्टवन्तः आसन्। तदा कश्चन धनिकः वणिक् उत्थाय उक्तवान् - "भगवन्! निर्धनानां बुभुक्षा निवारणीया इति चिन्तनं युक्तम् एव। अवश्यं करणीयं कार्यम् एतत्। किन्तु मम समीपे यत् ऐश्वर्यम् अस्ति तत् एतस्य महतः कार्यस्य निमित्तम् अत्यल्पम्" इति।

तदा सेनाधिकारी कश्चित् उत्थाय उक्तवान् - "यदि आवश्यकता भवति तर्हि मम शरीरस्य रक्तेन तर्पणं कुर्याम्। मम सैनिकाः अपि आत्मसमर्पणं कुर्युः। किन्तु निर्धनेभ्यः दातुम् आहारः तु अस्मत्समीपे नास्ति" इति।

एतदनन्तरं विशालभूमेः स्वामी उत्थाय उक्तवान् - "मम विशाला भूमिः यद्यपि अस्ति, तथापि ततः आयः नास्ति इदानीम्। यदि मम भूमिः समृद्धा स्यात् तर्हि अहं मम समग्रां सम्पत्तिं निर्धनेभ्यः अर्पयेयम्। प्रकृत्तं तु करदाने अपि कष्टम् अनुभवन् अस्मि" इति।

अन्ते सुप्रिया नाम भिक्षुः उत्थाय दृढस्वरेण उक्तवती - "अहं निर्धनानां बुभुक्षां निवारयिष्यामि" इति।

तदा तत्र सम्मिलिताः सर्वे आश्चर्येण पृष्टवन्तः - "कथं शक्यते एतत्? भिक्षायाचनेन स्वजीवनं यापयन्ती भवती कथं वा समस्त-निर्धनजनतायाः बुभुक्षां निवारयितुं शक्नुयात्?" इति।

तदा सुप्रिया शान्तेन, किन्तु दृढेन स्वरेण उक्तवती - "अहं स्वयं निर्धना, भिक्षायाचनपूर्वकं जीवनं यापयामि इत्येतत् सत्यम् एव। किन्तु स्मरन्तु - भिक्षा एव मम शक्तिः। मम निकटे भिक्षापात्रम् अस्ति। देशे धनिकाः अपि सन्ति बहवः। निर्धनानां बुभुक्षायाः निवारणार्थम् अपेक्षितानि धान्यानि तेषां धनिकानां धान्यागारेषु सन्ति। अतः न कोऽपि क्लेशः मम कार्ये" इति।

आत्मविश्वासयुक्तम् एतत् वचनं श्रुत्वा तत्र सम्मिलिताः सर्वे आश्चर्येण स्तब्धाः अभवन्। भगवान् बुद्धः मन्दहासपूर्वकं सुप्रियाम् आशीर्वादेन अनुगृहीतवान्। ●

एवम् आसन् महान्तः

# मरणात् पूर्वम् अपि व्यायामः !

● (सं) नारायणः

गोरखपुरस्य कारागारम्। तत्र 'काकोरी' - प्रकरणसम्बन्धी कश्चित् बन्धने स्थापितः आसीत्। विचारणा प्रवृत्ता। अन्ते एकस्मिन् दिने न्यायाधीशः उद्घोषितवान् - 'एतस्य अपराधः प्रमाणितः अस्ति। अतः एषः शूलारोपणेन दण्ड्यते' इति। एतत् तु पूर्वनिरीक्षितम् एव आसीत्। अतः एतत् उद्घोषणं श्रुत्वा अपि सः राष्ट्रभक्तः न खिन्नः, अपि तु सन्तोषेण हसितवान् - कठोरात् कारागारवासात् मोक्षः प्राप्तः इति कारणतः, मातुः पदतले जीवनपुष्पं समर्पयितुं मयापि अवकाशः प्राप्तः इति कारणतः च।

पुत्रस्य मरणदण्डनविधानं ज्ञात्वा माता धावन्ती पुत्रसमीपम् आगतवती। सः राष्ट्रभक्तः मातरं पादयोः नमस्कृतवान्, ततः ताम् आलिङ्ग्य उच्चैः रोदनम् आरब्धवान् च।

एतत् दृष्ट्वा खिन्ना माता उक्तवती - ''अहं चिन्तितवती आसं यत् मम पुत्रः धीरः राष्ट्रभक्तः इति। किन्तु किम् एतत् वत्स! मरणात् भीतिः वा भवतः? यदि मरणं ससन्तोषं स्वागतीकर्तुं धैर्यं नास्ति भवतः, तर्हि किमर्थं वा एषः मार्गः आश्रितः भवता?'' इति।

तदा पुत्रः सगद्गदम् उक्तवान् - ''अम्ब! मरणात् अल्पा अपि भीतिः नास्ति मम। भवत्याः पुत्रः अहं मरणात् कथं वा भीतः भवेयम्? सिंहीपुत्रः सिंहः एव भवति, न तु शृगालः। अतः अलं चिन्तया। इतः परं भवत्याः वात्सल्यं प्राप्तुं न शक्नोमि इत्यतः एतानि अश्रूणि अम्ब! धीरा वात्सल्यमयी च भवती पुत्रवियोगात् खिन्ना भविष्यति इति स्मरतः मम अश्रूणि अम्ब! एतानि कदापि भीतिजनितानि न'' इति।

राष्ट्रभक्तस्य शूलारोपणदिनं सम्प्राप्तम्। तस्मिन् दिने प्रातः एव कारागाराधिकारी तं राष्ट्रभक्तम् एतं विषयं स्मारितवान्। तथापि गम्भीरवदनः सः राष्ट्रभक्तः निरातङ्कं स्थितवान्। प्रतिदिनम् इव तस्मिन् अपि दिने सः भगवतः पूजां कृतवान्। श्रद्धया भगवद्गीतां पठितवान्, शारीरकव्यायामम् अपि यथापूर्वं कृतवान्।



एतत्सर्वं दृष्ट्वा सः कारागाराधिकारी आश्चर्येण पृष्टवान् - ''भोः, अचिरात् एव शूलारोपणं प्राप्नुवतः भवतः पूजा-गीतापारायणादिकं युक्तम् एव। मरणस्य सम्मुखीकरणे तादृशानि कार्याणि मनःस्थैर्यम् उत्पादयन्ति। किन्तु आसन्नमरणस्य भवतः एषः शारीरकव्यायामः किमर्थम्?'' इति।

तदा सः राष्ट्रभक्तः उक्तवान् - ''श्रीमन्! वयं भारतीयाः पुनर्जन्मनि विश्वसिमः। एतस्य जन्मनः कर्मणां फलम् एव अग्रिमे जन्मनि भविष्यति इति श्रूयते। अग्रिमे जन्मनि अपि मया देशार्थं कार्यं करणीयं, कष्टानि च अनुभोक्तव्यानि। तदर्थम् उत्तमं शरीरम् आवश्यकम् एव खलु? अतः अद्यापि व्यायामं कृतवान् अहम्'' इति।

एतत् श्रुत्वा सः कारागाराधिकारी आश्चर्यचकितः जातः।

एषः अप्रतिमः राष्ट्रभक्तः एव 'रामप्रसाद बिस्मिलः'। मातृभूम्यै आत्मानं ससन्तोषं समर्पयन् सः बहूनां प्रेरणादायकः जातः। ●

# There's something very Indian about a bank that puts a smile on every face.

**Indian Bank-The People's Bank. Since 1907.**

More than the milestones, more than the achievements, there's something every Indian Bank Customer takes pride in – the bank's commitment to the society.

Enter the world of Banking. With Indian Bank. A world that brings quality to life in India's heartland. As well as in industrialized India.

From rural development to international banking, Indian Bank is a social movement across borders. Reaching out, creating goodwill. And opening up a world of personalised banking. Indian Bank. Moulding lives. Shaping futures.



**Indian Bank**

H.O. 31, Rajaji Road, Madras - 600 001.

**A tradition in banking – Distinctly different.**



# पदरञ्जिनी १०



● **म. विजयलक्ष्मीः**

**वामतः दक्षिणम् -**

१. सरः नाम जलम्। तेन युक्ता नदी। (४)

३. अणुरूपं प्राप्तुम् उपकारिका सिद्धिः। (३)

४. व्रणेन युक्ता काचित्। (३)

६. शासकस्य बलं वर्धयति प्रजाप्रीतिः। एवं तर्हि तस्य बलं नाशयति कः ? (४)

७. पर्वतस्य पुत्र्याः पतिः पाशे अस्ति। (४)

९. कतगोत्रे जाता याज्ञवल्क्यस्य पत्नी। (४)

१२. एषा नदी न अल्पा, अपि तु महती। (४)

१४. तापात् जाता एषा वेदना। (३)

१५. अपहरणकारे भवन्तः 'अप' - इत्युपसर्गम् अपहरन्तु। तदा कः अवशिष्यते ? (३)

१६. यस्य सत्त्वं नितरां क्षीणं सः क्षीरे भवति। (४)

**उपरिष्टात् अधः -**

१. सम्यक् आरोपणात् कार्यक्रमस्य समाप्तिः भवति। (४)

२. एषा महिला न मन्दकोपयुक्ता। (४)

३. ज्येष्ठा सहोदरी अजायाम् अस्ति। (३)

५. 'तावत्' शब्दः स्त्रीलिङ्गे दीर्घ तिकारं प्राप्नोति। (३)

६. या संस्था ग्रन्थान् प्रकाशयति सा। (४)

८. दीर्घैः केशैः युक्तः जनः अत्र अधस्तात् उपरि दृश्यते। (४)

१०. त्यागी यः भवति तस्मिन् विद्यमानः गुणः। (३)

११. यस्याः अक्षिणी नीरे जाते कमले इव स्तः सा। (४)

१२. अस्मिन् हारे केवलं मणयः सन्ति। (४)

१३. यः नृत्यं करोति सः। (३)

## पदरञ्जिनी - ९ - उत्तराणि

**वामतः दक्षिणम् -**

१. शुनकेन ३. प्रतिभा ४. वनिता ६. सुतालयः ७. शशिकला ९. नारदेन १२. सतापसः १४. साकारा १५. युवकः १६. त्रेतायुगम्।

**उपरिष्टात् अधः -**

१. शुभाशयः २. नवदश ३. प्रणेता ४. तारक ६. सुराङ्गना ८. लालारसः १०. रक्षसा ११. नवरात्रे १२. सत्ययुगम् १३. पथिकः।

**शीर्षिकासमस्यायाः (५) उत्तरम्**

**प्रियायाः निरीक्षायां शुकः**

## शीर्षिकासमस्या - ७

१. हि रु मा षः पु म त न्वि

२. प र्व चि त पू नः रि ज

३. स ह न ज श्रे सः वा ष्ठ

४. द प्रा न र नि णी खा त

५. स्वा ल न म्ब नम् व व जी

६. क हा म ण्ठ णि रः य म

उपरि षट् अक्षरसमूहाः निर्दिष्टाः। तेषु स्थितानाम् अक्षराणां समुचितरीत्या संयोजनेन पदरचना करणीया। तेषु पदेषु स्थितानां विशेषाक्षराणां योजनेन पार्श्वे स्थितस्य चित्रस्य योग्या शीर्षिका रचनीया। रिक्ते स्थले सा लेखनीया च।



# किं प्रगतिः प्राप्यमाणा अस्ति भवद्भिः ?

• विश्वक्सेनः

*प्रगतिं साधयितुं कीदृशाः प्रयत्नाः करणीयाः, इदानीं वयं कुत्र स्मः इति कथं ज्ञातव्यम् इत्यादयः प्रश्नाः मनसि उद्भवन्ति खलु ? तेषां परिहारार्थम् अत्र सन्ति केचन प्रश्नाः।*

भगवान् मानवाय विवेकं यच्छन् बहुधा उपकृतवान् अस्ति। यदि विवेकस्य उपयोगः सम्यक् क्रियते तर्हि जीवने प्रगतिः अवश्यं सेत्स्यति। यद्यपि संस्कारः, परिसरः इत्यादयः मानवजीवनं प्रभावयन्ति, दैवम् अपि मानवजीवने प्रभावं पातयति, तथापि मानवः यदि विवेकस्य उपयोगं सम्यक् करोति तर्हि सर्वम् अपि अतिक्रम्य तिष्ठन् स्वजीवनं सम्यक् रूपयितुम् अर्हति।

जीवनम् उत्तमं कर्तुं महत् किमपि साधनीयम् इति नास्ति। लघुषु अपि केषुचित् अंशेषु यदि अधिकम् अवधानं दीयते तर्हि मानवस्य जीवनम् उत्तमं भवितुम् अर्हति। 'जीवनम् उत्तमं करणीयम्' इति सङ्कल्पं कृत्वा यदि योग्यः प्रयत्नः क्रियते तर्हि क्रमशः जीवनम् उत्तमं स्यात् एव। अग्रे पदस्य स्थापनं विना यथा गमनं न भवति, तथैव योग्यं प्रयत्नं विना प्रगतिः अपि न भवति।

प्रगतिं साधयितुं कीदृशाः प्रयत्नाः करणीयाः, इदानीं वयं कुत्र स्मः इति कथं ज्ञातव्यम् इत्यादयः प्रश्नाः मनसि उद्भवन्ति खलु ? तेषां परिहारार्थम् अत्र सन्ति केचन प्रश्नाः।

मनश्शास्त्रज्ञैः परिशोधनस्य आधारेण एते प्रश्नाः सज्जीकृताः। प्रतिप्रश्नं त्रिधा विकल्पः अस्ति। प्रथमं प्रश्नान् सश्रद्धं पठित्वा प्रामाणिकतया उत्तरं वदन्तु। अन्ते भवत्स्थितेः निर्णयार्थं मार्गः निर्दिश्यते। प्रश्नाः तावत् –

अ) १. भवन्तः शीघ्रकोपिनः वा ? तन्नाम दिने तदा तदा कोपः प्राप्यते वा ? प्राप्तः कोपः दीर्घकालं पीडयति वा ?

२. कोपप्राप्तिसन्दर्भे अपि भवन्तः कोपं निगृह्य शान्ततया तिष्ठन्ति वा ?

३. केनचित् कारणेन क्वचित् कोपः प्राप्यते। तथापि अचिरात् एव कोपोपशमनं प्राप्यते वा ?

आ) १. गतेषु केषुचित् दिनेषु खेदप्रसङ्गाः बहुधा आगताः वा ?

२. गतजीवने यावत् आसीत् ततोऽपि अधिकतया प्रसन्नचित्तता इदानीम् अनुभूयते वा ?

३. न अधिकः खेदः, न वा अधिकप्रसन्नचित्तता। उभयसम्मिश्रम् अस्ति जीवनम् इति भासते वा ?

इ) १. गृहसदस्यैः सह विना कारणं वादं कुर्वन्तः, अल्पवयस्कान् विना कारणं (क्षुल्लककारणनिमित्तं वा) तर्जयन्तः भवन्ति वा भवन्तः ?

२. प्रीतिपूर्णं सम्बन्धं रक्षन्तः भवन्तः गृहे हृद्यस्य परिसरस्य सुखम् अनुभवन्ति वा ?

३. क्वचित् अधिकप्रीतेः प्रदर्शनं, क्वचिच्च निष्कारणं कोपः च प्रदर्श्यते वा भवद्भिः ?

ई) १. यत्र उक्ताः विषयाः (कथा वा) अचिरात् एव विस्मृताः भवेयुः तादृशानि कथापुस्तकानि अधिकतया पठन्ति वा भवन्तः ?

२. उदात्तजीवनपरिचायकानि, उदात्तविचारप्रचोदकानि, विमर्शात्मकानि च पुस्तकानि पठन्ति वा भवन्तः ?

३. कथापुस्तकादीनि अपि पठ्यन्ते, क्वचित् उदात्तविचारयुक्तानि अपि पठ्यन्ते इति अस्ति वा भवतां स्थितिः ?

उ) १. इतोऽपि अधिकं धनं कथं सम्पादनीयम्, सुख(भोग)साधनानां क्रयणार्थं कीदृशी व्यवस्था करणीया स्यात् इति चिन्तनम् एव सदा भवति वा भवतां मनसि ?

२. धनं तु कथमपि आगच्छेत् एव, अतः उद्योगेतरसमयस्य सदुपयोगः कथम् इति चिन्तनं सदा मनसि भवति वा ?

३. धनसम्पादनचिन्ता अपि भवति, कदाचित् समाजसेवादिषु मनः प्रवर्तते अपि इति अस्ति वा ?

ऊ) १. वेतनहेतुके एव कार्ये समग्रः समयः यापितः भवति वा ?

२. विरामसमयः अध्ययनार्थं, सेवार्थं, परोपकारार्थम्, आध्यात्मिकचिन्तनार्थं वा उपयुज्यते वा ?

३. ज्ञानवृद्ध्यर्थं कौशलवृद्ध्यर्थं च किमपि क्रियमाणम् अस्ति वा ?

ऋ) १. प्रतिवेशिभिः सह, सार्वजनिकैः सह वा व्यवहारः न रोचते वा ?

२. प्रतिवेशिभिः सह व्यवहारे सार्वजनिकसम्पर्के च विशेषासक्तिः अस्ति वा ?

३. आवश्यकतायां सत्याम् अन्यैः सह व्यवह्रियते चेदपि सामान्यतः जनसम्पर्कः न रोचते इति अस्ति वा ?

ए) १. सद्यःकालीना भवतां स्थितिः खेदं जनयति वा ?

२. पूर्वं स्वजीवनविषये यथा सन्तोषः आसीत् तथैव सद्यःकालीना स्थितिः अपि तृप्तिकरी एव अस्ति वा ?

३. पूर्वतनस्थितेः सद्यःकालीनस्थितेः च कोऽपि भेदः न परिलक्ष्यते वा ?

ऐ) १. पूर्वं यावत् सम्पाद्यते स्म ततोऽपि न्यूनं सम्पाद्यते वा इदानीम् ?

२. इदानीन्तनसम्पादनं पूर्वतनसम्पादनात् अपि अधिकम् अस्ति वा ?

३. सम्पादनम् अन्यूनाधिकं सत् यथापूर्वम् अनुवर्तते वा ?

ओ) १. ये भवतां सहवासे सन्ति तेषु अधिकान् दोषान् एव पश्यन्तः तेषां सहवासात् उपयोगात् वा दूरं गच्छन्ति वा भवन्तः ?

२. ये सम्पर्के भवन्ति तेषु गुणान् एव अधिकतया द्रष्टुं शक्नुवन्तः भवन्तः जनानुरागं सम्पादयन्तः सन्ति वा ?

३. दोषाः गुणाः चापि दृश्यन्ते, आवश्यकतायां सत्यां जनानाम् उपयोगः स्वीक्रियते इति अस्ति वा ?

औ) आत्मीयः कश्चित् यदा दोषं करोति तदा -

१. एतन्निमित्तं तर्जनं, निन्दनं, ताडनं वा क्रियते वा ?

२. दोषः किमर्थं कृतः इति ज्ञात्वा दोषस्य कारणम् अवगमयितुं प्रयत्नः क्रियते वा ?

३. 'किम् एतेन मम' इति मत्वा तूष्णीं स्थीयते वा ?

क) १. आकर्षकं वस्तु यदा दृश्यते तदा क्रेतव्यम् एव इति प्रबला इच्छा भवति वा ?

२. आवश्यकतां दृष्ट्वैव वस्तूनां क्रयणं क्रियते वा ?

३. क्वचित् आकर्षणवशतः, क्वचिच्च आवश्यकतां दृष्ट्वा च वस्तूनि क्रीयन्ते वा ?

ख) गतषण्मासावधौ -

१. सञ्चयः न कृतः एव, सञ्चयापेक्षया व्ययः अधिकः जातः इति अस्ति वा ?

२. पूर्वापेक्षया अधिकः सञ्चयः कृतः वा ?

३. पूर्वं यावान् सञ्चयः क्रियते स्म तावान् एव कृतः अस्ति वा ?

ग) यदा अन्यस्य सहवासः स्नेहः वा करणीयः भवति तदा -

१. जातिं, जीवनस्तरं, धनिकत्वं वा प्रथमं पश्यन्ति वा भवन्तः ?

२. केवलं गुणान् दृष्ट्वा स्नेहः सहवासः वा साध्यते वा ?

३. यद्यपि सहवास-स्नेहसमये जात्यादिविषये आस्था न प्रदर्शिता, तथापि सजातीयाः समानस्तरीयाः चैव मम सम्पर्के स्नेहे च सन्ति इति तु सत्यम् एव इति अस्ति वा ?

घ) १. षड्भ्यः मासेभ्यः पूर्वं यादृशं जीवनम् आसीत् तादृशम् एव जीवनम् अस्ति वा इदानीम् अपि ? अथवा जीवनं नीरसम् इव प्रतिभासते वा सदापि ?

२. किमपि परिवर्तनं, काऽपि सिद्धिः, कस्यापि क्रयणम् इत्यादिकं भवति इत्यतः जीवने आकर्षणं प्रवृद्धम् इति भासते वा ?

३. जीवनस्तरस्य परिवर्धनं न जातं चेदपि परिवर्धनेच्छा तु अक्षीणा एव अस्ति वा ?

उपरि आहत्य पञ्चदश प्रश्नाः सन्ति । तत्र प्रथम(१)प्रश्नस्य उत्तरस्य एकः(१) अङ्कः । द्वितीय(२)प्रश्नस्य उत्तरस्य त्रयः(३) अङ्काः । तृतीय(३)प्रश्नस्य उत्तरस्य द्वौ (२) अङ्कौ ।

भवन्तः प्रामाणिकबुद्ध्या उत्तरम् उक्तवन्तः इत्यत्र अस्ति अस्माकं दृढः विश्वासः । यदि भवन्तः ३५-४५ अङ्कान् प्राप्तवन्तः स्युः तर्हि भवतां जीवनं प्रगत्युन्मुखम् अस्ति इत्यत्र नास्ति सन्देहः । किन्तु एतावता गर्वः अनुभोक्तव्यः नास्ति, एतावता एव तृप्तैः भवितव्यम् अपि नास्ति । किमपि उदात्तं लक्ष्यं निश्चित्य जीवने अग्रे पदानि स्थापयन्तु । त्यागः, समर्पणं, सेवा इत्यादीनां गुणानां प्राधान्यं भवतु जीवने ।

यदि भवन्तः २५-३४ अङ्कान् प्राप्तवन्तः स्युः तर्हि ज्ञायते यत् भवद्भिः केषुचित् अंशेषु प्रगतिं साधयितुं शक्तं चेदपि अन्येषु केषुचित् अंशेषु प्रगतिः साधनीया अस्ति इति । दृढः सङ्कल्पः, दृढं मनोबलं, निरन्तरः प्रयत्नः च प्रगतेः सोपानम् । प्राज्ञानां मार्गदर्शनं, सज्जनसहवासश्च जीवने नितराम् उपकरोति । 'जीवने यावत् आदानं स्यात् प्रदानं ततोऽधिकम्' इति वचनं सदा स्मरन्तु भवन्तः । परिवारात्, परिसरात्, समाजात् च यावत् प्राप्तं ततोऽपि अधिकं प्रदातुं प्रयत्नं कुर्वन्तु । प्रयत्ने कृते, अवश्यं साफल्यम् अवाप्नुवन्ति भवन्तः ।

यदि २५ अङ्काः अपि न प्राप्ताः तर्हि निश्चितं यत् प्रगतिप्राप्त्यर्थं भवतां प्रयत्नः नितरां दुर्बलः इति । तथापि चिन्ता नास्ति, इतः पूर्वं कृतः प्रयत्नः दुर्बलः अस्ति चेदपि इतः परं प्रबलः प्रयत्नः कृतः चेत् तदनुगुणं फलं लभ्येत एव । गतं न शोचयेत् प्राज्ञः । अग्रे दृष्टिः भवतु भवतां, न तु गतस्य विषये चिन्ता । दृढसङ्कल्पं कृत्वा अग्रे गच्छन्तु । सफलता कदापि न व्यक्त्यधीना, अपि तु तत्तद्व्यक्तिप्रयत्नाधीना । प्रयत्ने श्रद्धा भवतु सदापि ।

'जीवनं कीदृशं स्यात्' इति अपि निर्दिशति एषा प्रश्नावली । अतः प्रामाणिकं प्रयत्नं कुर्वन्तः वयम् इतोऽप्यतिशयितां प्रगतिं प्राप्तुं सदापि प्रयत्नपराः स्याम ।

(साधारं सज्जीकृतम् एतत् ।)

# किम् एतत् जानन्ति भवन्तः ?

**य**दा मानवादीनां पिपासा भवति तदा ते कुत्रापि गत्वा जलं पिबन्ति । किन्तु वृक्षादयः यदा पिपासिताः भवन्ति तदा किं वा कुर्वन्ति ? यतः ते चलने भावाविष्करणे वा असमर्थाः खलु ?



अतः विज्ञानिभिः एकं विशिष्टं चेतनायन्त्रं (Sensot) निर्मितम् अस्ति । एतत् यन्त्रं वृक्षस्य पर्णेषु संयोज्यते । वृक्षः यदा पिपासितः भवति तदा एतत् चेतनायन्त्रं जलयन्त्रं प्रवर्तयति । पिपासानिवारणात् अनन्तरं वृक्षः चेतनायन्त्रद्वारा सङ्केतं प्रेषयति । ततः जलयन्त्रस्य कार्यं स्थगितं भवति । एतत् चेतनायन्त्रम् इस्रेल्देशस्य विज्ञानिभिः सज्जीकृतम् अस्ति । भारते अपि क्वचित् एतस्य यन्त्रस्य उपयोगः क्रियमाणः अस्तीति श्रूयते ।

---

**भो** भोः 'टोम्याटो'प्रियाः ! अत्र काचित् अप्रिया वार्ता भवताम् । ये टोम्याटोफलम् अधिकतया सेवन्ते तेषु मूत्रकोषरोगाः अधिकतया सम्भाव्यन्ते इति वैद्याः स्मारयन्ति ।



न केवलं टोम्याटोफलम्, अपि तु आलुकं, पयोहिमं, मण्डयुक्तं क्षीरं, पोतकीसस्यम् इत्यादीनि अपि मूत्रकोषरोगस्य कारणानि भवितुम् अर्हन्ति इति अभिप्रयन्ति वैद्याः । 'एतेषु क्याल्सियं, सोडियम्, ओक्सलेट् इत्यादयः अंशाः भवन्ति । ते मूत्रकोषे शिलाखण्डसदृशं द्रव्यम् उत्पादयन्ति' इति वैद्यानां कथनम् ।

'**भ**क्षितेऽपि लशुने न शान्तो व्याधिः' इति संस्कृते एकम् आभाणकं श्रूयते । आभाणकनिर्माता कस्य रोगस्य निमित्तं लशुनं भक्षितवान् इति न जानीमः । किन्तु एतत् तु सत्यं यत् क्षयरोगी यदि लशुनरसं सेवते तर्हि क्षयरोगात्




मुक्तिं (न तु इहलोकात्) प्राप्तुम् अर्हति इति । 'क्षयरोगकारकाणां रोगाणूनां नाशने समर्थः अस्ति लशुनरसः । एतत् प्रयोगैः दृढीकृतः अस्ति अपि' इति वदति देहलीनगरस्था गुरुतेगबहादूर-चिकित्सालयस्य वैद्या डा. डि. श्रीललितावर्या । कीटनाशकरूपेण अपि लशुनरसस्य उपयोगः कर्तुं शक्यते इति अपि वदति सा ।

---

**के**शस्नानद्रव्यं (शाम्पू) केशानां मार्दवतां जनयति उत न इति, केशानां सौष्ठवं वर्धयति वा न वा इति च विषयः विवादास्पदं स्यात् कदाचित् । किन्तु एतत् तु निश्चितं यत् तत् अर्बुद(क्यान्सर्)रोगं निवारयति इति । ग्राहकजागृति-संशोधन-सम्बद्धया संस्थया कयाचित् एषः अंशः प्रतिपादितः अस्ति । विविधैः प्रयोगैः तया संस्थया एषः अंशः प्रमाणीकृतः अस्ति अपि ।




केशस्वास्थ्यविषये सा संस्था एवं वदति - 'शाम्पू'प्रभृतीनाम् उपयोगतः केशस्वास्थ्यं रक्ष्यते वर्ध्यते च इति तु नास्ति ।आरोग्यं, वयः, वंशपारम्पर्यं च आधारीकृत्य तिष्ठति केशस्वास्थ्यम्' इति ।

सा संस्था एतदपि ज्ञापयति - 'उत्तमकेशप्राप्त्यर्थं फेनिलफल-(शिकाकाय्) चूर्णादीनाम् उपयोगः एव श्रेयस्करः' इति ।

## ग्रन्थपरिचयः

• डा।। एस्. आर्. लीला

# संस्कृतशिक्षणे प्रायोगिकाध्यापनविधानम्

स्वनामधन्यमिदं पुस्तकं तिरुपतिक्षेत्रस्थे राष्ट्रियसंस्कृतविद्यापीठे स्थितेन वरिष्ठव्याख्यात्रा डा. कानाल नलचक्रवर्ति- महोदयेन विरचितम् । अन्यान्यदेशेषु अर्वाचीनकाले आविष्कृतानां पद्धतीनाम् अनुसारेण भाषासाहित्यशिक्षणं कथं विधेयमिति सोदाहरणनिरूपणमेव ग्रन्थस्यास्य विषयः।

भिन्न-भिन्नग्रन्थेभ्यः सङ्गृहीतैः अंशैः साकं स्वानुभवमपि मेलयित्वा डा. चक्रवर्तिमहोदयः पुस्तकमिदम् अत्यन्तम् उपयुक्तं कृतवान् अस्ति । भाषाभ्यासिनां संस्कृताध्यापकानां च्छात्राणां च कार्तज्ञ्यम् अर्हति डा. चक्रवर्तिमहोदयः।

इदानीन्तनकाले तत्र तत्र संस्कृत-विद्यापीठेषु शिक्षाशास्त्रि(B.Ed. in Samskrit)पदवीनिमित्तं संस्कृतेनापि अर्वाचीनपद्धत्या अध्यापनं विधातुम् अवकाशः समुपकल्पितः वर्तते । अनन्यमनस्कः शिष्यः संस्कृतैकदत्तचित्तः प्राचीनपद्धत्या शिक्षमाणः असाधारणं पाण्डित्यं प्राप्नुयादित्यत्र सन्देहलेशोऽपि नास्ति। परं तु अधुना संस्कृतं अन्यैः शास्त्रैः अन्याभिः भाषाभिः च सह अभ्यस्यते। अतः कालोचितः कश्चन पाठनविधिः उपादेयः इति कृत्वा भाषाशिक्षणार्थं विदेशेषु परीक्षितगुणः अध्यापनक्रमः अत्रापि आदृतः । शिक्षणविद्भिः आधुनिकैः नैकविधाः सरणयः उद्भाविताः दृश्यन्ते । तासु जर्मन्देशीयेन हर्बर्ट्महोदयेन निर्दिष्टः विधिः पञ्चसोपानात्मकः। उन्मुखीकरणं, प्रदर्शनं, तुलना/अमूर्तीकरणं, सामान्यीकरणम्, अनुप्रयोगश्च इति तानि पञ्च सोपानानि । कक्ष्यायाम् उपविष्टान् चित्तचाञ्चल्यपीडितान् च्छात्रान् प्रथमतः पाठ्यवस्तु प्रति उन्मुखीकरणं कथं साधनीयमिति प्रथमं सोपानम्। एतदर्थं शिष्यचित्ताकर्षिका समर्था प्रस्तावना काचन देया आदौ। अनया च्छात्राः प्रकृतपाठसमाविष्टमनस्का: भवन्ति । तदनन्तरं विषयोपस्थापनं भवति। एतदनन्तरं बालकानां सञ्चितज्ञानेन वर्तमानपाठस्य तुलना, ततः व्याकरणनियमानाम् अवगमनाय सामान्यीकरणसोपानं, ततश्च ज्ञातांशानां दृढीकरणाय अनुप्रयोगश्च आश्रयणीयः । एतद्विषये करणीयाः सर्वे मार्गाः अत्र निरूपिताः सन्ति । तथैव, प्रतिदिनं स्थितेषु पञ्चसु षट्सु वा अवधिषु संस्कृतार्थम् एकः अवधिः प्राप्तः चेत् तस्य कथं वा पूर्णोपयोगः करणीयः, के के प्रमुखांशाः पाठनीयाः, बोधनं सार्थक्यं गमयितुम् अवधानं कुत्र भवेत्, कीदृशेन प्रस्तावेन पाठोपक्रमः विधेयः, कः भागः कृष्णफलके लेखनीयः, पाठान्ते च गृहकार्यार्थं कीदृशाः प्रश्नाः देयाः इत्यादयः छात्र-मनस्समावर्जकाः अध्यापनसम्बद्धाः सर्वेऽपि विशिष्टांशाः अत्र साङ्गोपाङ्गं निरूपिताः सन्ति।

अत्र निर्दिष्टानि पाठनविधिसूत्राणि उदाहरणद्वारा यतः प्रयोगदशामप्यारूढानि, इत्यतः ग्रन्थस्यास्य उपयोगः द्विगुणीभूतः। संस्कृतवाङ्मयप्रकाराणां गद्य-पद्य-नाटकादीनां पाठनसमये अध्यापकेन मनसि निधेयाः पाठबिन्दवः पौनःपुन्येन प्रपञ्चिताः सन्ति। शिक्षाशास्त्रि-पदवीनिमित्तं संस्कृताभ्यासं कुर्वताम् ईदृशपुस्तकानां परिचयः भवति, किन्तु M.A. पदवीं प्राप्तवतां, महाविद्यालयेषु अध्यापकत्वेन नियुक्तिम् अभिलषमाणानाम् अध्यापनविधेः परिचयः कस्मिन्नपि स्तरे न भवत्येव.। अनेन निमित्तेन नूतनाध्यापकाः बहवः कक्ष्यां प्रविश्य किङ्कर्तव्यताविमूढाः,

श्रीहर्षवासवदत्ता - ग्रन्थमाला-4

अखिलभारत शिक्षाशास्त्री, B. Ed., प्रशिक्षणार्थिनां कृते विरचितोऽयं ग्रन्थः

संस्कृतशिक्षणे
प्रायोगिकाध्यापनविधानम्

लेखकः –
डा. कानाल नलचक्रवर्ती,
व्याकरणशिरोमणि, शिक्षाशास्त्री
विद्यावारिधि (Ph.D.)
M.A. (संस्कृतम्) M.A. (तेलुगु) M.Ed.,
वरिष्ठ व्याख्याता
राष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालय)
तिरुपति (आ. प्र.)

श्रीवेंकटाम्बा पब्लिकेषन्स्
तिरुपतिः (आ. प्र.)

अनधीताध्यापनक्रमाः न केवलं स्वयं क्लेशम् अनुभवन्ति, परं तु च्छात्रान् अपि स्वस्य असामर्थ्येन क्लेशयन्ति, त्रासयन्ति च। च्छात्राः संस्कृताद् विमुखाः भूत्वा संस्कृतं कष्टं पिष्टमिति उपलपन्तः संस्कृतप्रसारस्य हानिमुत्पादयन्ति । अतः एतन्निवारणार्थं सविनयमत्र विज्ञाप्यते यत् नूतनाध्यापकैः सर्वैरपि ईदृशग्रन्थाः अनुसन्धेयाः इति।

अस्मिन् पुस्तके प्रदर्शिताः विषयः केचन सम्भाषणसंस्कृतपाठनपद्धत्यां श्रीमता च.मू. कृष्णशास्त्रिणा पूर्वमेव प्रयुक्ताः, इदानीं भाषाशिक्षणे रूढगुणाश्च दृश्यन्ते।

पुस्तके अस्मिन् मुद्राराक्षसस्य उपप्लवः बहुत्र अक्षिगोचरो भवति । अग्रिमकाले पुनर्मुद्रापणावसरे दोषोऽयं परिह्रियते चेत् पुस्तकस्य आस्वाद्यता उपयुक्तता च इतोऽपि अतिशय-वृद्धिम् एष्यति इति सविनयं सम्प्रार्थ्यते। ●



# वैज्ञानिकदृष्ट्या हिन्दुत्वस्य विवेचनम्

● डा।। एन्. एस्. राजाराम्  ● (अनु) वेङ्कटेशः सि. वि.

हिन्दुधर्मः कीदृशः इति विषये अन्ये इव अहम् अपि कदाचित् भ्रान्तः एव आसम्। हिन्दुधर्मस्य स्वरूपस्य विषये बहवः हिन्दवः, तत्रापि पाश्चात्यदेशवासिनः हिन्दवः, विशेषतः भ्रान्ताः दृश्यन्ते। एवं तर्हि को नाम हिन्दुधर्मः? दीपावल्यादीनां नैमित्तिकपर्वणाम् आचरणं हिन्दुधर्मः, उत सन्ध्यावन्दनादीनां नित्यकर्मणाम् आचरणम्? हिन्दुधर्मः नाम जगन्मान्यस्य वेदस्य अध्ययनम्, उत विश्ववन्द्यायां भगवद्गीतायां विश्वासः, उताहो परमसहनायाः प्रदर्शनम्, आहोस्वित् विश्वशान्तेः प्रतिपादनम्? अथवा एतेषु अन्यतमः कश्चन अंशः हिन्दुधर्मः, उत एतादृशानाम् अंशानां समवायः एव सः?

एतादृशाः प्रश्नाः यदा उद्भवन्ति तदा, अहं चिन्तयामि, हिन्दवः बहवः इदमित्थम् इति निर्णयं प्राप्तुं न शक्नुवन्ति। एवं स्थिते अन्येषां बोधनस्य विषयः तावत् दूरापास्तः एव। तत्रापि क्रैस्तमतप्रेरितदृष्टिः 'सुशिक्षितः हिन्दुः' आत्मपरिशीलने, हिन्दुजीवनप्रवाहस्य अवगमने च विशेषक्लेशम् अनुभवति। एतस्य परिणामतः एव सः यदा स्वविचारम् उपस्थापयति तदा 'सर्वधर्मसमत्वम्' प्रतिपादयति, विशेषार्थरहितं तादृशम् एव वाक्यसमूहं स्वमुखात् निस्सारयति वा।

किन्तु पाश्चात्यदृष्ट्या हिन्दुधर्मस्य मौल्यस्य स्वरूपस्य वा निश्चयः निश्चयेन अनर्थकरः एव। अहम् अत्र हिन्दुधर्मस्य प्रचारकः सन् किमपि वदन् नास्मि। अद्यावधि विविधैः जनैः यद्यत् उक्तं तत् सर्वं हिन्दुधर्मस्य विषये अन्यथाभावम् एव जनयति, न तु तस्य वास्तविकं स्वरूपं परिचाययति। अन्यदपि अत्र अवगन्तव्यं यत् क्रैस्त-मुसल्मानादीनां पौरुषेयाणां मतानां दृष्टि-शक्त्यादयः हिन्दुधर्मस्य वस्तुतत्त्वं वर्णयितुं सर्वथा न अलम्। यतः हिन्दुधर्मः अपौरुषेयः, तानि च मतानि पौरुषेयाणि।

**अभिमानी कश्चित् यथा अभिमानवशात् धर्मस्य प्रशंसां कुर्यात् तथा विज्ञानी कर्तुं न अर्हति। यतः वस्तुनिष्ठं चिन्तनं भवति तस्य। प्रामाण्यं विना कमपि विषयं न अङ्गीकरोति सः। लेखनेऽस्मिन् प्रसिद्धः विज्ञानी हिन्दुधर्मे आत्मना दृष्टान् विशेषान् कांश्चित् निरूपितवान् अस्ति।**

मम दृष्ट्या, हिन्दुधर्मस्य अनवगमने कारणं सद्भावस्य प्रीतेः वा अभावः न, अपि तु अपरिष्कृता दृष्टिः एव, या च पौरुषेयाणां मतानां प्रतिपादकेषु पुस्तकेषु निरूपिता अस्ति। पौरुषेयमतानां दृष्टिम् अवलम्ब्य हिन्दुधर्मस्य अवगमनार्थं क्रियमाणः प्रयत्नः न्यूटनस्य चलननियमम् अवलम्ब्य परिमाणतन्त्रज्ञानस्य (Quantum Mechanics) अवगमनार्थं कृतेन प्रयत्नेन समः स्यात्। हिन्दुधर्मः हिन्दुदृष्ट्या एव द्रष्टव्यः, न तु अन्यमतप्रभावितया अप्रशस्तया दृष्ट्या। लेखनेऽस्मिन् एतया एव पृष्ठभूमिकया यथाशक्ति सरलया शैल्या उच्यते किञ्चित्।

विषयप्रवेशात् पूर्वम् इदमत्र स्पष्टीकर्तुम् इच्छामि यत् अहं कश्चन विज्ञानी सन् किञ्चित् वदामि, न तु वेदान्ती आस्तिकः वा सन्। यद्यपि हिन्दुकुटुम्बे एव मम जन्म अभवत्, तथापि अहं कदापि धर्मनिष्ठः न आसम्। कदापि अहं हिन्दुधर्मपरिपालकत्वेन जनैः न परिगणितः अपि। इतिहासक्षेत्रे तत्त्वज्ञानक्षेत्रे च मया यत् कार्यं कृतं ततः हिन्दुधर्मविषये मम आसक्तिः अङ्कुरिता।

एषु दिनेषु प्रवृत्तानि संशोधनानि ज्ञापयन्ति यत् गणितं, तत्रापि रेखागणितं, वेदकाले, तन्नाम क्रिस्तात् पूर्वं ३००० तमे वर्षे एव आसीत् इति। मया अपि संशोधनात् परिज्ञातम् अस्ति यत् इतिहासकारेण पतञ्जलिमहर्षिणा लिखितेषु प्रसिद्धेषु योगसूत्रेषु गणितीयपरिकल्पना आसीत् इति। एषः विचारः मयि कुतूहलम् अजनयत्। तर्कबद्धतमस्य अपि शास्त्रस्य धार्मिकम् आध्यात्मिकं च मूलं भवति इत्ययम् अंशः मयि विद्युत्सञ्चारम् अकरोत्। 'तर्कबद्धतया चिन्तनस्य (Rational Thinking) अपि किञ्चन आध्यात्मिकं मूलं भवति एव' इत्येषः विचारः प्रायः वाचकेषु अपि बहुषु अत्याश्चर्यं जनयेत् अपि! महर्षिः पतञ्जलिः, ग्रीक्तत्वज्ञानी पैथागोरसः च आध्यात्मवादिनौ एव आस्ताम्। तौ एव तर्कबद्धचिन्तनसरणेः उपस्थापनं कृतवन्तौ, यस्याश्च आधारेण अस्माकं सभ्यता (Civilization) तिष्ठति। एषः अंशः एव हिन्दु-ग्रीक्-धार्मिकविचारेषु गभीरं चिन्तनं कर्तुं माम् अचोदयत्। अहं हिन्दुधर्मविषये यत् अत्र वक्तुम् उद्युक्तः तत् पूर्वोक्तस्य एव शोधस्य फलम्। यथाशक्ति सरलैः एव पदैः अहं विषयं



डा।। नवरत्नं राजारामवर्यः गणितज्ञः, भाषाशास्त्रज्ञः, इतिहासकारत्वेन सुप्रसिद्धः च। कृत्रिमेधाविज्ञानक्षेत्रे रोबाट्क्षेत्रे च सुप्रसिद्धेषु विज्ञानिषु अन्यतमत्वेन ख्यातः अस्ति डा।। राजारामवर्यः। भाषासु भाषाशास्त्रे च आसक्तः सः एषु दिनेषु प्राचीनेतिहासविषये विशेषसंशोधनं कुर्वन् अस्ति। इतिहासम् अधिकृत्य तेन बहवः ग्रन्थाः लिखिताः सन्ति अपि।

निरूपयामि । ऐतिहासिकात् तत्त्वज्ञानीयात् च संशोधनात् ज्ञातान् विचारान् षड्भिः मूलभूतैः अंशैः निरूपयिष्यामि । ते च अंशाः -

*१ . हिन्दुत्वस्य न ऐतिहासिकः आरम्भः अस्ति । (तन्नाम - 'हिन्दुत्वम् अनादि ।')*

हिन्दुधर्मस्य अतिपुरातनः सनातनग्रन्थः ऋग्वेदः । एषः चिरन्तनः (चिरकालस्थायी) अपि । वस्तुतः कश्चन विज्ञानी सन् अहम् एतम् अंशं कष्टेन एव अङ्गीकरोमि । प्रपञ्चस्य इतिहासे प्रायः तादृशः कश्चन कालः आसीत्, यस्मिन् च ऋग्वेदे उक्ताः अंशाः न आसन् । किन्तु नवदशे शतके स्थितैः अस्माभिः तादृशः तु कालखण्डः न ज्ञायते यस्मिन् च ऋग्वेदस्य रचनायाः आरम्भः जातः स्यात् । मेक्स्मूलर्-प्रभृतयः युरोपीयविद्वांसः, भारतीय-विमर्शकाः च 'क्रि.पू. १२०० तमे शतके ऋग्वेदस्य रचना अभवत्' इति महता श्रमेण प्रतिपादितवन्तः । एषः निश्चयः तैः बैबल्ग्रन्थानुगुणं कृतः ।

सत्यं तु एतदस्ति - पुरातत्त्व-शास्त्रशोधनानुगुणं वयं वक्तुं शक्नुमः यत् क्रि.पू. ७००० वर्षेभ्यः पूर्वं भारते ऋग्वेदसंस्कृतिः आसीत् इति । हिमयुगस्य अन्त्यं क्रिस्तात् पूर्वं ८००० तमे वर्षे जातम् । ऋग्वेदः तु ततः पूर्वं तदनन्तरं वा आसीत् इति वक्तुं शक्यते । ऋग्वेदे उक्तेषु स्थलेषु दृश्यमानं हिमच्छेदनम् अत्र प्रत्यक्षसाक्षी इव अस्ति । ऋग्वेदकालीनेन इन्द्रेण कृतः 'वृत्र' संहारः अत्र प्रमाणं स्यात् । (वृत्रः = यः आवृत्य तिष्ठति सः) आहत्य कथनस्य अयम् आशयः यत् क्रैस्तमतस्य इव, इस्लांमतस्य इव वा हिन्दुधर्मस्य आरम्भवर्षम् आरम्भशतकं वा वयं निर्देष्टुं न शक्नुमः एव इति ।

ऐतिहासिकयोः इस्लां-क्रैस्तमतयोः संस्थापकः कश्चन पुरुषः अस्ति । किन्तु हिन्दुधर्मस्य तादृशः कश्चित् नास्ति । क्रिस्तात् ऋते क्रैस्तमतं न भवेत्, मोहम्मदात् ऋते च इस्लांमतम् अपि न भवेत् । किन्तु हिन्दुधर्मस्य तादृशः ऐतिहासिकः पुरुषः नास्ति, यस्मात् च ऋते हिन्दुधर्मः न भवेत् इति वयं वक्तुं शक्नुयाम ।

*२ . हिन्दुधर्मः अपौरुषेयः । एतस्य एककर्तृकत्वम् एकपुस्तक-परिमितत्वं वा नास्ति ।*

हिन्दुधर्मस्य परमं प्रमाणं - 'वेदाः' । 'विद्' धातोः उत्पन्नस्य 'वेद' पदस्य 'ज्ञानम्' इत्यर्थः । वेदमन्त्राः केनापि न लिखिताः, अपि तु 'मन्त्रद्रष्टृभिः' दृष्टाः । वेदाः नाम ज्ञानानां सङ्ग्रहभूतः कश्चन राशिः । यः कोऽपि हिन्दुः कस्यचित् शास्त्रस्य विषये, सर्वशास्त्राणां विषये वा प्रश्नं कर्तुम् अर्हति । यः शास्त्राणां सत्ताम् एव निराकरोति सः अपि हिन्दुः एव ! भगवद्गीता अपि वेदस्य प्रामाण्यस्य विषये प्रश्नं करोति । हिन्दुधर्मग्रन्थाः केवलमार्गदर्शकाः । सर्वोऽपि हिन्दुः स्वदृष्ट्यनुगुणं स्वकीयं मार्गम् अनुसर्तुम् अर्हति अत्र ।

**प्रपञ्चस्य इतिहासे प्रायः तादृशः कश्चन कालः आसीत्, यस्मिन् च ऋग्वेदे उक्ताः अंशाः न आसन् । किन्तु नवदशे शतके स्थितैः अस्माभिः तादृशः तु कालखण्डः न ज्ञायते, यस्मिन् च ऋग्वेदस्य रचनायाः आरम्भः जातः स्यात् ।**

*३ . हिन्दुधर्मे धार्मिकसत्यस्य अद्वितीयबोधकः कोऽपि नास्ति ।*

हिन्दुधर्मस्य अन्येषां पौरुषेयमतानां च अयं कश्चन भेदः अस्ति यत् यः हिन्दुः देवे विश्वसिति सः स्वचिन्तनानुगुणं मार्गम् अनुसर्तुम् अर्हति । तेन मध्यवर्ती मार्गदर्शकः देवदूतः वा अनुसरणीयः नास्ति । पौरुषेयमतेषु तावत् मध्यमर्तिबोधकद्वारा देवदूतद्वारा वा देवः ज्ञातुं शक्यः, न अन्यथा । यः मध्यवर्तिनि अविश्वासं प्रदर्शयति सः नास्तिकः इति परिगण्यते पौरुषेयमतेषु । भगवति विश्वासं कृत्वा मध्यवर्तिनि अविश्वासं प्रकटयितुं कोऽपि न शक्नोति तत्र । तादृशः भगवति विश्वसिति चेदपि मध्यवर्तिविषयक-विश्वासाभाववान् भवति इत्यतः सः नास्तिकत्वेन एव परिगण्यते । अतः पौरुषेयमतानाम् आशयः एषः भवति यत् भगवति यावान् विश्वासः प्रकट्यते तावान् एव विश्वासः मध्यवर्तिजने अपि प्रकटनीयः इति ।

एते मध्यवर्तिनः देवांशसम्भूताः इति कथ्यन्ते, अतः एव धर्ममार्गानुसरणविषये एते क्वचित् अतिनैष्ठुर्यम् अपि प्रदर्शयन्ति । हिन्दुधर्मे तादृशः मध्यवर्तिजनः नानुमोद्यते ! हिन्दुधर्मे तावत् सर्वे पुरुषाः, स्त्रीजनाः, बालाः चापि स्वप्रयत्नेन भगवतः साक्षात्कारं प्राप्तुम् अर्हन्ति । ग्रन्थाः तावत् तेषां प्रयत्ने, तैः अनुस्रियमाणे मार्गे च सहायकाः भवन्ति । देवदृष्ट्या सर्वेऽपि समानाः भवन्ति ।

*४ . हिन्दुधर्मः कस्यचित् मार्गस्य, बोधकस्य वा अद्वितीयत्वं न अङ्गीकरोति ।*

देवस्य प्राप्त्यर्थम् अयम् एकः एव मार्गः इति चिन्तनं, परमतत्त्वं ज्ञातुं कस्यचित्

**देशाभिमानः**

इंग्लैण्ड्देशे आसीत् किञ्चन पादकन्दुकदलम् । प्रसिद्धा काचित् उद्यमसंस्था एतस्य दलस्य प्रायोजकत्वं निर्वहति स्म । पादकन्दुकदलेन स्वस्य उपयोगार्थं क्रीडाङ्गणम् एकं निर्मातुं सङ्कल्पितम् । कार्यम् आरब्धम् अपि । तच्च दलं निर्णयम् अकरोत् यत् श्रेष्ठस्तरीयम् अयः जर्मन्तः आनाय्य क्रीडाङ्गणनिर्माणे उपयोक्तव्यम् इति ।

किन्तु एषः निर्णयः प्रायोजकसंस्थायाः असन्तोषाय जातः । "अस्माकं देशे एव सर्वश्रेष्ठस्य अयसः निर्माणं प्रचलति । एवं स्थिते विदेशात् अयसः आनयनस्य का आवश्यकता ? स्वदेशस्य अयसः विषये यस्य प्रीतिः नास्ति तादृशस्य देशाभिमानहीनस्य पादकन्दुकदलस्य साहाय्यम् अस्माभिः किमर्थं करणीयम् ?" इति तस्याः संस्थायाः वरिष्ठैः प्रश्नः कृतः ।

"अस्माकं देशस्य पादकन्दुकदलेन यदि अस्मद्देशीयम् अयः न उपयुज्यते तर्हि वयं तस्यै संस्थायै वराटिकामात्रं धनम् अपि न दास्यामः" इति तया संस्थया निर्दाक्षिण्यम् उक्तम् ।

एषः एव खलु देशाभिमानः नाम !

अनन्यमार्गदर्शकतां वा न अङ्गीकरोति हिन्दुधर्मः । कोऽपि मार्गः, कोऽपि सन्देशः वा बहुषु अन्यतमः भवितुम् अर्हति, न तु अद्वितीयः । मार्गस्य अद्वितीयत्वम् आस्तिक-नास्तिकभेदेन जगत् द्विधा विभजति । किन्तु हिन्दुत्वम् एतादृशं कार्यं न करोति । श्रीकृष्णः भगवद्गीतायां वदति - 'सर्वे मार्गाः माम् एव प्राप्नुवन्ति' इति । 'देवं ज्ञातुम् एषः अद्वितीयः मार्गः इति ये वदन्ति तान् तिरस्करोति हिन्दुधर्मः । अतः एव अत्र कोऽपि धर्मबोधकः देवदूतः वा 'सर्वैः अपि एवम् एव करणीयम्' इति निर्देष्टुं नार्हति ।

**कुतूहलजनकः अंशः अयम् अस्ति यत् हिन्दुधर्मः तादृशः अनन्यः धर्मः, यश्च अनन्यत्वप्रतिपादकं किमपि तत्त्वं न पुरस्करोति ।**

### ५ . *परमतावलम्बिनं न निर्बध्नाति हिन्दुधर्मः ।*

परमात्मनः साक्षात्कारः स्वानुभवद्वारा एव भवति इति वदति हिन्दुधर्मः । अतः अत्र मतपरिवर्तनार्थं चोदनम् अनुरोधः वा न दृश्यते । बहुव्यापित्वेन ख्यातानि इस्लां-क्रैस्तादीनि मतानि साम्राज्यशक्तिद्वारा बाह्यशक्तेः विकासं सम्पादयन्ति । हिन्दुत्वं तावत् व्यक्तिद्वारा अन्तश्शक्तेः वर्धनं प्राप्य स्वविकासं सम्पादयति । अतः एव हिन्दुधर्मेण एतत् न चिन्तितं यत् मतपरिवर्तनार्थं भुषुण्डि-सुवर्णसहिताः दूताः प्रेषणीयाः इति । ये हिन्दुत्वं ज्ञातुम् इच्छन्ति ते अध्ययनद्वारा, योग्यमार्गदर्शकस्य साहाय्येन वा इष्टं साधयितुम् अर्हन्ति ।

सम्प्रति विश्वे हिन्दुधर्मविषये, तस्य शाखारूपस्य बौद्धमतस्य विषये च विशेषासक्तिः दृश्यते । किन्तु मतप्रचारकसैन्यसहितेन पोपाख्येन बहुराष्ट्रियवाणिज्यं यथा क्रियते तथा तु अत्र न कृतं, न क्रियते च । विदेशेषु दृश्यमानाः हिन्दुसंस्थाः स्वयंसेवासंस्थाः । यदि कोऽपि ताः प्रति गच्छति तर्हि सः अवगन्तुं शक्नोति एव यत् अन्यमतकेन्द्रेषु दीयमानस्य शिक्षणस्य, हिन्दुधर्मकेन्द्रे दीयमानस्य शिक्षणस्य च कीदृशः भेदः भवति इति । कोऽपि अर्चकः, संन्यासी वा आत्मनः देवप्रेषितत्वं न समर्थयति अत्र । सः अधीतशास्त्रः, आध्यात्मरतः वा भवति । अतः एव महान्तः विज्ञानिनः, कलाकाराः, अन्ये एतत्तुल्याः मेधाविनः च हिन्दुधर्मेण आकृष्टाः दृश्यन्ते । 'तर्कबद्धविचारेण कमपि न निर्बध्नाति हिन्दुधर्मः' इत्येषः अंशः एव तेषाम् आकर्षणबीजम् ।

### ६ . *हिन्दुत्वस्य वैशिष्ट्यं नाम मार्गचयने चिन्तने च स्वातन्त्र्यम् ।*

हिन्दुधर्मस्य ग्रन्थाः ज्ञानप्रधानाः सन्तः परमात्मतत्त्वस्य अवगमने विविधान् मार्गान् बोधयन्ति । एते च मार्गाः उपनिषदां द्वारा, पुराणानां द्वारा, योगद्वारा वा ज्ञातुं शक्याः । अन्यमतप्रचारकैः रचितानां ग्रन्थानाम् औपम्येन यदि हिन्दुधर्मस्य ग्रन्थानां मौल्यमापनं क्रियेत तर्हि तत् सर्वथा अनुचितम् एव । अन्यानि मतानि अनन्यमार्गत्वं प्रतिपादयन्ति (अतः एव एतद्विरुद्धं युरोपदेशेषु परिष्कारान्दोलनं प्रवृत्तम्) चेत् हिन्दुधर्मग्रन्थाः तावत् बोधयन्ति यत् सर्वोऽपि स्वदृष्ट्यनुगुणं, स्वविश्वासानुगुणं, स्वसामर्थ्यानुगुणं च व्यवहरेत् इति । उपनिषत्सु, भगवद्गीतायाम्, अन्येषु ग्रन्थेषु च भगवतः साक्षात्कारं प्राप्तुं बहुविधाः मार्गाः निर्दिष्टाः दृश्यन्ते ।

कुतूहलजनकः अंशः अयम् अस्ति यत् हिन्दुधर्मः तादृशः अनन्यः धर्मः, यश्च अनन्यत्वप्रतिपादकं किमपि तत्त्वं न पुरस्करोति । पूर्वोक्तेषु षट्सु अंशेषु अन्तिमः - 'मार्गचयने चिन्तने च स्वातन्त्र्यम्' इति यः अस्ति सः तावत् अत्युत्कृष्टतमः अंशः अस्ति । यानि मतानि एतादृशं गुणं सर्वथा न अर्हन्ति तानि कथं वा हिन्दुधर्मस्य तुलनाम् अंशमात्रेण वा अर्हन्ति ?

स्वमार्गस्य निर्णये अनुसरणे च सर्वेषां मार्गदर्शनं साहाय्यं वा आवश्यकं भवति एव । वेदाः, उपनिषदः, गीता इत्यादयः तावत् तादृशम् एव मार्गदर्शनं कुर्वन्ति । सहस्राधिकवर्षेभ्यः पूर्वम् एव गायत्रीमन्त्रेण सूर्यः 'सविता' इति निर्दिष्टः अस्ति । गायत्री वदति - 'सः सविता धियः प्रचोदयिता' इति । अहं चिन्तयामि - 'धियो यो नः प्रचोदयात्' इत्येषः मन्त्रः हिन्दुधर्मस्य सारः इति । ●

## स्मारं स्मारं सुखिनः स्याम !

सर्वेषामपि अस्माकं जीवने तादृशाः केचन प्रसङ्गाः सम्भवन्ति एव, यान् च वयं कदापि विस्मर्तुं न शक्नुमः । एतादृशाः अविस्मरणीयाः प्रसङ्गाः पुनराकलनेन न केवलम् आनन्दं जनयन्ति, नवताम् अपि प्राप्नुवन्ति । हृदयहारिणः एतादृशाः प्रसङ्गाः कदाचित् अन्येषु प्रेरणामपि जनयेयुः । भवन्तः स्वजीवने प्रवृत्तान् एतादृशान् प्रसङ्गान् अन्यान् निवेदयितुम् अर्हन्ति - 'स्मारं स्मारं सुखिनः स्याम' इत्येतस्मिन् विभागे । **सन्देशवाचकानां लेखनस्य अवसरदानाय एव एषः नूतनः विभागः आरप्स्यते ।** भवन्तः अत्र स्वानुभवान् निरूपयितुम् अर्हन्ति ।

एतत्सम्बन्धे काश्चन सूचनाः -

* वाचकैः लिखितेषु अनुभवेषु चिताः अनुभवाः एव अत्र प्रकाशयिष्यन्ते ।
* वाचकाः अतीवसरलया शैल्या (सन्धिरहितया) संक्षिप्तरूपेण फुल्स्केप्प्रमाणके पत्रे एकस्मिन् एव पृष्ठे स्वानुभवं लिखेयुः ।
* *सम्भाषणसन्देशः,*
  *'सुखिनः स्याम' विभागः,*
  *'अक्षरम्', गिरिनगरम्,*
  *बेङ्गलूरु - ५६० ०८५*

  इत्येतस्मै सङ्केताय लेखनं प्रेषयेयुः ।
* लेखनस्य भाषापरिष्कारः सम्पादकाधीनः ।
* अप्रकाशितानि लेखनानि न प्रतिप्रेषयिष्यन्ते ।
* प्रकाशितस्य लेखनस्य कृते उचितं गौरवधनम् अपि दास्यते ।

# सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः



विश्वविद्यालयस्य मुख्यभवनम्

**संस्कृतभाषायाः आदिमः विश्वविद्यालयः सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः। तस्य स्थूलः परिचयः दीयते अत्र।**

● **विश्वासः**

सर्वैः अपि संस्कृतज्ञैः सुविदितमेव यत् वाराणसीस्थः सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः भारतस्य सर्वप्रथमः संस्कृतविश्वविद्यालयः इति। परन्तु बहुभिः एतत्तु न ज्ञातं स्यात् यत् एतस्य विश्वविद्यालयस्य आरम्भः ईस्ट् इण्डिया कम्पनीद्वारा कृतः इति। तदानीं भारते शासनं कुर्वत्या तया संस्थया १७९१ तमे वर्षे बनारसपाठशालानाम्न्याः संस्कृत-पाठशालायाः प्रारम्भकरणेन विश्व-विद्यालयस्य बीजावापः कृतः। सः एव इदानीं विश्वविद्यालयत्वेन विकसितः अस्ति।

**उद्देशः**

यद्यपि आङ्ग्लेयैः संस्कृतपाठशालायाः आरम्भः कृतः, तथापि इदं वक्तुं न शक्यते यत् तत्र कारणं तेषां संस्कृतप्रीतिः एव इति। यतः संस्कृतपाठशालायाः स्थापनं करणीयम् इति विषये प्रस्तावं कुर्वता 'ईस्ट् इण्डिया कम्पनी' संस्थायाः तदानीन्तन-शासनाधिकारिणा जोनाथन डङ्कनेन एतस्य लाभद्वयम् एवम् उल्लिखितम् -...

१) संस्कृतपाठशालारम्भकारणतः हिन्दु-जनैः ज्ञातं भवेत् यत् हिन्दुधर्मे हिन्दुसिद्धान्तेषु च आङ्ग्लेयाः वयं यावत् स्निह्यामः तावत् हिन्दुराजाः अपि न



कुलपतिः प्रो॥ वि. वेङ्कटाचलम्

प्राच्यविद्यायाः प्रकाण्डविद्वान् प्रो॥ वि. वेङ्कटाचलम् सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य इदानीन्तनः कुलपतिः। मद्रास्-अभिजनः श्री वेङ्कटाचलम् आधुनिकविद्यायां, परम्परागतविद्यायां च पारङ्गतः। सः न केवलम् अत्युत्तमः विद्वान्, अपि तु सुयोग्यः प्रशासकः अपि। 'पद्मश्री' विरुदभूषितः सः राष्ट्रपतिसम्मानपत्रेण अपि सम्मानितः। बहवः ग्रन्थाः तेन सम्पादिताः रचिताश्च, येषु भास-नामकग्रन्थः सुविख्यातः।

विश्वविद्यालयस्य गौरवं संवर्धितवतः प्राक्तनान् शास्त्रज्ञान् सर्वान् विदुषः सर्वदा सगौरवं स्मरन् श्री वेङ्कटाचलं तत्सदृशीं विद्वत्परम्परां पुनरपि प्रतिष्ठापयितुं निरन्तरं यतमानः अस्ति। सहकारिणाम् अन्येषां विदुषां साहाय्येन विश्वविद्यालयच्छात्रेषु शास्त्रप्रीतिः यथा उत्पन्ना भवेत् तथा कर्तुं तस्य अविरतः यत्नः प्रचलति।

समग्रे देशे केभ्यश्चित् वर्षेभ्यः प्रचलतः संस्कृत-सम्भाषण-आन्दोलनस्य विषये अत्यानन्दं प्रकटयन् प्रो॥ वेङ्कटाचलः गतवर्षे बेङ्गलूरुनगरे स्थितस्य संस्कृतविभागस्य कार्यालयम् 'अक्षरम्' अपि आगत्य कार्यकर्तॄन् सर्वान् अभिनन्दितवान् आसीत्। सद्यःकाले काशीप्रदेशे प्रवृत्ते संस्कृत-सम्भाषण-अभियाने तस्य सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य च सम्पूर्णः सहकारः आसीदेव।

स्निह्यन्ति इति। एतेन आङ्ग्लेयाः हिन्दुजनानां प्रीतिपात्राणि भविष्यन्ति।

२) भविष्यति काले अत्र शासनं करिष्यद्भिः आङ्ग्लेयैः हिन्दूनां वादविवादप्रसङ्गेषु न्यायनिर्णयः करणीयः। तादृशसन्दर्भेषु हिन्दुविधीन्, हिन्दुव्यवस्थां च अनुसृत्य कथं न्यायनिर्णयः करणीयः इत्यस्मिन् विषये आङ्ग्लन्यायाधीशानां साहाय्यं कर्तुं योग्याः व्यक्तयः एतस्याः पाठशालातः निर्मिताः भवेयुः इति।

## आरम्भः

डङ्कनेन कृतः प्रस्तावः गवर्नर्‌जनरल् लार्ड् कार्नवालिसेन अङ्गीकृतः अभवत्। तदानीन्तन-काशीनरेशस्य श्री महीपनारायण-सिंहस्य आङ्ग्लेयानां च मध्ये सन्धिः जातः यत् वाराणसीनगरस्य आये शिष्टः कश्चन भागः पाठशालानिर्वहणार्थं विनियोक्तव्यः इति। एवम् आरब्धायाः संस्कृतपाठशालायाः नाम 'बनारसपाठशाला' अथवा 'हिन्दु कालेज्' इत्यासीत्। कालक्रमेण सा 'संस्कृतकालेज्', 'काशिक - राजकीय - संस्कृत-पाठशाला' इत्यादीनि नामानि प्राप। पं।। श्री काशीनाथः पाठशालायाः प्रथमः प्राचार्यः आसीत्।

## बोधनविषयाः

वेदाः, उपवेदाः, वेदाङ्गानि, दर्शनानि धर्मशास्त्राणि, पुराणानि च आरम्भे अत्र बोधनविषयाः आसन्। अनन्तरं गच्छता कालेन अन्ये अपि विषयाः स्वीकृताः।

## मुख्य-भवननिर्माणम्

१८४७ तमे वर्षे मुख्यभवनस्य शिलान्यासः कृतः। पाश्चात्य-गैथिक-स्थापत्यकलाम् अनुसृत्य चतुर्णां वर्षाणां परिश्रमेण भव्यं भवनं निर्मितम्। तदेव विश्वविद्यालयस्य मुख्यं भवनम्। दूरतः अवलोकनेन राजभवनमिव दृश्यमानम् इदं भवनम् अद्यापि विश्वविद्यालयस्य शोभां नितान्तं वर्धयत् तिष्ठति।

जे. म्यौरः, डा।। बेलण्टाइनः, आर्.टि.एच्. ग्रिफिथः, डा।। वेनिसः इत्यादयः पाश्चात्याः विद्वांसः प्राचार्यपदम् अलङ्कृत्य विद्यालयस्य अभिवृद्धौ सहयोगं कृतवन्तः।

महामहोपाध्यायः डा।। गङ्गानाथ झा १९१८ तः १९२३ पर्यन्तं प्राचार्यः आसीत्। तस्य काले दुर्लभानां बहूनां संस्कृतग्रन्थानां सम्पादनं, प्रकाशनं, तेषाम् आङ्ग्लानुवादकार्यं च प्राचलत्। अमुद्रितानां प्राचीनग्रन्थानां प्रकाशनाय सरस्वतीग्रन्थमाला आरब्धा। अनुसन्धानसम्बन्धिनिबन्धानां प्रकाशनाय सरस्वतीभवन-अनुशीलनपत्रिका च आरब्धा। विद्यालयच्छात्राणां छात्रवृत्तेः व्यवस्था अपि कल्पिता। अनन्तरम् आगताः अन्येऽपि विद्वांसः स्वपरिश्रमेण विद्यालयस्य सर्वाङ्गीणं विकासं सम्पादितवन्तः।



विश्वविद्यालयस्य प्रमुखम् आकर्षणकेन्द्रम् अस्ति सरस्वतीभवनपुस्तकालयः। एषः पुस्तकालयः २०० वर्षेभ्यः पूर्वम् एव आरब्धः आसीत्। ग्रन्थानां हस्तलिखितविभागः, मुद्रितविभागः इति विभागद्वयम् अस्ति अत्र। हस्तलिखितग्रन्थविभागः अन्ताराष्ट्रियस्तरे अपि ख्यातः, यतः अन्यत्र अलभ्याः बहवः ताडग्रन्थाः अत्र सङ्गृहीताः सन्ति। इदानीं २,०९,२५४ हस्तलिखित-ग्रन्थाः, १,८५,५३५ मुद्रितग्रन्थाः च पुस्तकालये सन्ति।

स्वतन्त्रभारते उत्तरप्रदेशस्य मुख्यमन्त्रिपदे स्थितः विश्रुतः संस्कृतविद्वान् डा।। सम्पूर्णानन्दः एतमेव विद्यालयं विश्वविद्यालयत्वेन परिणमयितुं महान्तं प्रयत्नं कृतवान्। स्वमनोरथस्य मूर्तरूपस्य 'वाराणसेय - संस्कृतविश्वविद्यालयस्य उद्घाटनं सः एव २०१५ विक्रमसंवत्सरे चैत्रशुक्लद्वितीयायां शनिवासरे (२२.३.१९५८) कृतवान्। डा।। आदित्य-नाथ झा विश्वविद्यालयस्य प्रथमः उपकुलपतिः आसीत्।

१२.१.१९७४ तमे दिनाङ्के 'सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः' इति एतस्य पुनर्नामकरणं कृतम्।

## शिक्षणम्

१) वेदवेदाङ्गसङ्कायः, २) साहित्य-







विश्वविद्यालयपरिसरे विराजमानाः मनोहरविग्रहाः

सङ्घायः, ३) दर्शनसङ्घायः, ४) श्रमण-विद्यासङ्घायः, ५) आधुनिक-ज्ञानविज्ञान-सङ्घायः - इत्येतत्पञ्च- सङ्घायान्तर्गताः २२ विभागाः इदानीम् अत्र शिक्षणरताः सन्ति । भूतान, सिक्किम्, नेपाल, मलेशिया, मोरिषस्, आस्ट्रेलिया, जर्मनी - इत्यादिभ्यः विदेशेभ्यः आगताः बहवः च्छात्राः अत्रत्ये अन्ताराष्ट्रिय- च्छात्रावासे निवसन्तः अध्ययनं कुर्वन्ति । भारतीयच्छात्राणां तु संख्या महती अस्ति । विश्वविद्यालये, तदन्तर्गतेषु अन्येषु विद्यालयेषु च ६० सहस्राधिकाः छात्राः प्रथमा, पूर्वमध्यमा, उत्तरमध्यमा, शास्त्री, आचार्य, प्रमाणपत्रीय (Diploma) कक्ष्या इत्यादिषु संस्कृताध्ययनं कुर्वन्ति । विद्यावारिधि-उपाधिनिमित्तं विद्यावाचस्पति-उपाधिनिमित्तं च बहवः च्छात्राः अनुसन्धानकार्यरताः सन्ति ।

शिक्षाशास्त्री (बि.एड्), शिक्षाचार्यः (एम्.एड्), ग्रन्थालय-सूचना-विज्ञानशास्त्री (बि.लिब्) इत्येतासां कक्ष्याणामपि अध्यापनं प्रचलति अत्र ।

मनोहरे विशाले विश्वविद्यालयपरिसरे तत्र तत्र निर्मिताः बुद्ध-महावीर-शारदा-गणेशादीनां सुन्दर्यः प्रतिमाः परिसरस्य सौन्दर्यं वर्धयन्त्यः विराजन्ते ।

काशीं गच्छता सर्वेण अपि भारतीयेन गङ्गास्नानं, विश्वनाथदर्शनं च अवश्यं क्रियते एव । परन्तु संस्कृतज्ञेन तु न केवलं तावत्, अपि तु सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य दर्शनम् अपि अवश्यं कर्तव्यं, यतः सः खलु संस्कृतविद्यायाः आदिमं महाकेन्द्रम् ।




## मन्त्रालये वैशिष्ट्यपूर्णा विद्वत्सभा

मन्त्रालयस्य श्रीराघवेन्द्रस्वामिमठे अखिलभारतीया संस्कृत-विद्वन्महासभा मे-मासस्य प्रथमे सप्ताहे त्रीणि दिनानि यावत् प्रवृत्ता । एतस्यां विद्वत्सभायां देशस्य नानाभागेभ्यः समागताः द्विशताधिकाः संस्कृतविद्वांसः भागम् ऊढवन्तः । वेदान्तशास्त्रं, धर्मशास्त्रं, व्याकरणं, मीमांसा - इत्यादीनि शास्त्राणि अधिकृत्य अत्र विशेषचर्चा प्रवृत्ताः । मन्त्रालयश्री गुरुसार्वभौममठाधीशाः श्री श्री सुशमीन्द्र-तीर्थश्रीपादाः सुवर्णमन्त्राक्षतैः शुभाशीर्भिः च पण्डितान् अनुगृहीतवन्तः । एतत्सन्दर्भे एव श्री गुरुसार्वभौमसंस्कृत-विद्यापीठेन प्रकाशितानां केषाञ्चित् पुस्तकानां लोकार्पणम् अपि कृतम् । आध्यात्मिकज्ञानपिपासवः लौकिकाः अपि सहस्राधिकाः एतस्यां सभायाम् उपस्थिताः आसन् ।

## 'रामायणदर्शनं' संस्कृतभाषया अपि

कर्णाटकराज्यस्य मैसूरु-विश्वविद्यालयस्य कुवेम्पु-कन्नडाध्ययनसंस्था कुवेम्पुवर्येण कन्नडभाषया विरचितस्य 'श्रीरामायणदर्शनम्' इत्येतस्य महाकाव्यस्य संस्कृतानुवादम् अचिरात् एव प्रकाशयिष्यति । 'रामायणदर्शनं' महाकाव्यं कन्नडभाषायाः 'मेरुकृतिः' इति परिगणिता अस्ति । एतस्याः संस्कृतानुवादः श्रीयुतेन प्राध्यापकेन सि.जि. पुरुषोत्तमवर्येण सज्जीकृतः अस्ति ।

## लोकभाषासमितिपक्षतः भुवनेश्वरे राष्ट्रिय-संस्कृत-कर्मशाला

"आधुनिकभारतीयभाषाणां गङ्गोत्री भवति संस्कृतम् । आधुनिकभाषाणां समृद्ध्यर्थं, भारतीयसंस्कृतेः भूयशः प्रसारार्थं च संस्कृतस्य आवश्यकता अस्ति" इति भुवनेश्वरे प्रवृत्तायां राष्ट्रिय-संस्कृत-कर्मशालायां समितेः राष्ट्रियमहासचिवः डा।। सदानन्ददीक्षितः उक्तवान् । एतस्यां कर्मशालायां राष्ट्रियप्रशासनसचिवः श्री विपिनबिहारी शतपथी, राष्ट्रियप्रशिक्षण-सचिवः डा।। कुंमारचन्द्रमिश्रः, श्री जगन्नाथ-संस्कृतविश्वविद्यालयस्य दर्शनविभागाध्यक्षः राष्ट्रियसचिवः च डा।। प्यारीमोहन-पट्टनायकः, न्यायविभागाध्यक्षः डा।। केशवचन्द्रदाशः इत्यादयः बहवः विद्वांसः कार्यकर्तारश्च भागम् ऊढवन्तः ।

एतस्यां कर्मशालायां कर्मकाण्डशिबिरं, संस्कृतसम्भाषणवर्गः, संस्कृत-डिप्लोमाकक्ष्या इत्यादीनां पाठ्यक्रमस्य समीक्षा कृता । एषा कर्मशाला एप्रिल्मासस्य अष्टम-नवम-दिनाङ्कयोः (दिनद्वयम्) प्रवृत्ता ।

## ग्रन्थः लोकाय अर्पितः

बेङ्गलूरुनगरस्थस्य एन्.एम्.के.आर्.वि. महिला-महाविद्यालयस्य संस्कृतविभागस्य प्रवक्तुः डा।। एस्. रङ्गनाथवर्यस्य नूतनं पुस्तकं - 'स्वातन्त्र्योत्तर-संस्कृत-वनिता-साहित्यम्' - इत्येतत् एप्रिल्-मासस्य चतुर्दशे दिनाङ्के लोकाय अर्पितम् । अन्ताराष्ट्रिय-महिलावर्षे (International Women's Year) स्वागतार्होऽयं प्रयत्नः रङ्गनाथवर्यस्य । लोकार्पणकार्यक्रमे परमपूज्याः श्री श्री परमानन्दभारतीस्वामिनः अनुग्रहभाषणं कृतवन्तः ।

## राजस्थानराज्ये संस्कृतविश्वविद्यालयः

"अग्रिमे शैक्षणिकवर्षे राजस्थानराज्ये संस्कृतविश्वविद्यालयः स्थापयिष्यते" इति एतद्राज्यीयेन मुख्यमन्त्रिणा श्रीयुतेन बैरोन्सिंग् शेखावत्महोदयेन मे-मासस्य चतुर्थे दिनाङ्के उद्घोषितम् अस्ति । संस्कृतस्य विकासार्थं क्रियमाणः एषः उपक्रमः सर्वैः संस्कृतज्ञैः सहर्षं स्वागतीक्रियते । सर्वेषां संस्कृतज्ञानां प्रतिनिधीभूय राजस्थानसर्वकारं, तत्रापि मुख्यमन्त्रिणं श्री शेखावत्वर्यं, सहर्षम् अभिनन्दति सम्भाषणसन्देशः ।

## गोवाराज्ये फोण्डानगरे संस्कृतवर्गः संपन्नः

एप्रिल् २४तः एप्रिल् ३० दिनाङ्कपर्यन्तं गोवाराज्ये फोण्डानगरे राज्यशिक्षणशास्त्रसंस्थायाः सहकारेण गोवा-विद्या-प्रतिष्ठानेन सप्तदिनात्मकः एकः संस्कृतवर्गः संयोजितः आसीत्। एतस्मिन् वर्गे २५ ग्रामेभ्यः आगताः ७६ शिक्षार्थिनः भागं गृहीतवन्तः। सम्भाषणसंस्कृतम्, अध्यापनपद्धतिः, वैदिकगणितम्, संस्कृत-आशुलिपिः, संगणकीयसंस्कृतम्, खगोलशास्त्रम् इत्येतेषु विषयेषु शिक्षार्थिनः मार्गदर्शनं प्राप्तवन्तः। पुण्यपत्तनात् आगतः, संस्कृतविद्वद्वरः श्रीमान् प्रभाकरजोशी-महोदयः वर्गसंचालनं मार्गदर्शनं च कृतवान्। तेन सह हिन्दुसेवाप्रतिष्ठानेन सम्भाषण-शिबिरस्य सञ्चालने प्रशिक्षिता कुमारी श्यामलागुणेमहोदया आगतवती आसीत्।

एप्रिल्मासस्य ३० तमे दिनाङ्के वर्गस्य समापन-कार्यक्रमः संस्कृतविद्वद्वरस्य श्रीमतः अनन्तभटमहोदयस्य आध्यक्ष्ये सम्पन्नः। एतस्मिन् कार्यक्रमे भाषमाणः श्रीमान् प्रभाकरजोशीमहोदयः - "भारतस्य गतवैभवस्य पुनःप्राप्त्यर्थं संस्कृतभाषायाः प्रसारः प्रचारः च नितराम् आवश्यकः" इति प्रतिपादितवान्। वेदशास्त्रसम्पन्नः श्रीमान् गोडबोलेमहोदयः, प्राचार्यः सुभाष-वेलिङ्गकरः, राज्यशिक्षणसंस्थायाः सञ्चालकः श्रीमान् विजयकुमार पाटणेकरः इत्येतैः मान्यवरैः शिक्षार्थिभ्यः प्रमाणपत्राणि प्रदत्तानि।

## श्रीमते ताताचार्यवर्याय प्रदत्ता रामकृष्णदालमिया-श्रीवाणी-अलङ्करणप्रशस्तिः

भारतस्य प्रधानमन्त्री श्री पि.वि. नरसिंहराव्वर्यः श्रीमते प्राध्यापकाय एम्. एस्. रामानुजताताचार्यवर्याय एतद्वर्षीयां रामकृष्णदालमिया-श्रीवाणी-अलङ्करणप्रशस्तिं गते मासे (मे-मासे) १५ दिनाङ्के दत्तवान्। एषः प्रशस्तिप्रदानकार्यक्रमः देहलीनगरे सम्पन्नः। एषा प्रशस्तिः द्विलक्ष(२,००,०००)-रूप्यकैः, श्रीवाणीमूर्त्या, मङ्गलवस्त्रेण, श्रीफलेन च युक्ता अस्ति। ताताचार्यवर्येण रचितस्य 'प्रत्यक्षतत्त्वचिन्तामणिविमर्शः' इत्येतस्य व्याख्याग्रन्थस्य निमित्तम् अन्यविध-संस्कृतसेवा-निमित्तं च एषा प्रशस्तिः प्रदत्ता अस्ति।

६७ वर्षीयः श्री ताताचार्यवर्यः पाण्डिचेरिगरस्थायाः 'फ्रेञ्च् इन्स्टिट्यूट् आफ् इण्डालजी' संस्थायाः गौरवप्राध्यापकत्वेन कार्यं कुर्वन् अस्ति। तिरुपतिस्थस्य 'राष्ट्रियसंस्कृतविद्यापीठ' नामकस्य मानित-विश्वविद्यालयस्य उपकुलपतिः अपि आसीत् श्रीयुतः ताताचार्यवर्यः।

"सर्वासां भारतीयभाषाणाम् आधार भूतायाः संस्कृतभाषायाः कृते ऐदम्प्राथम्येन प्राशस्त्यं दीयमानम् अस्ति इति यत् तत् तु महते सन्तोषाय" इति स्वसन्तोषं प्रकयन् मान्यः प्रधानमन्त्री श्री नरसिंहरावः उक्तवान् - "यद्यपि नूतनशिक्षानीतौ संस्कृतस्य विशिष्टं स्थानं परिकल्पितम् अस्ति, तथापि एतावता अपि तस्याः भाषायाः विषये पर्याप्तमात्रेण अवधानं दीयमानं नास्ति" इति।

सर्वोच्चन्यायालयस्य भूतपूर्व-न्यायाधीशस्य श्रीयुतस्य वै.वि. चन्द्रचूडवर्यस्य आध्यक्ष्ये निर्णायकमण्डल्या शताधिकविद्वद्भ्यः प्रेषिताः ४२५ कृतीः परामृश्य श्रीताताचार्यः प्रथमत्वेन चितः।

भारतीयग्रन्थकारेण संस्कृतभाषया विरचितायै कृतये (अभिजातकृतये अनूदितायै वा) प्रतिवर्षम् एषा प्रशस्तिः प्रदीयते।

## अखिलभारतीय-आचार्यप्रशिक्षण-वर्गस्य आरम्भः जातः

विद्याभारती - अखिलभारतीय-शिक्षासंस्थानस्य तत्त्वावधाने राजस्थानस्य राजधान्यां जयपुरे विद्यमाने केशवविद्यापीठे अखिलभारतीय-संस्कृत-आचार्य-प्रशिक्षणवर्गस्य शुभारम्भः मे-मासस्य चतुर्थे दिनाङ्के जातः। राजस्थानस्य शिक्षामन्त्री श्री गुलाबचन्दजी कटरिया दीपज्वालनपूर्वकं वर्गस्य उद्घाटनं कृतवान्।

मुख्यभाषणं कुर्वन् श्री कटरिया उक्तवान् यत् - "एषः प्रशिक्षणवर्गः सम्पूर्णदेशस्य कृते नूतनां दिशं निश्चयेन दर्शयिष्यति" इति। संस्कृतविषये राजस्थानशासनस्य आसक्तिं विवृण्वन् श्री कटरिया - "राजस्थाने सर्वेषु विद्यालयेषु संस्कृतशिक्षणम् अनिवार्यं भवेत् इति एतत् अस्माकम् इच्छा सङ्कल्पश्च। विद्यालयेषु इदानीं त्रिषु कालांशेषु यत् संस्कृतपाठनम् अस्ति, तदेव १९९६ जुलैतः षट्सु कालांशेषु पाठ्यते। इदानीं सर्वे जनाः संस्कृतस्य आवश्यकतां महत्त्वं च ज्ञात्वा तस्य अनिवार्यरूपेण पठनविषये सहमताः सन्ति" इति।

भारतीपत्रिकायाः सम्पादकः श्री गिरिराजशर्मा कार्यक्रमे भाषमाणः - "एषा संस्कृतसम्भाषण-कल्पना श्री बाबासाहेब-आप्टेमहोदयस्य स्वप्नः आसीत्। भारती-पत्रिकायाः आरम्भकाले सः उक्तवान् आसीत् यत् अग्रे भारते कोटिशः जनाः संस्कृतभाषायां व्यवहरिष्यन्ति इति। सः स्वप्नः इदानीम् अत्र अक्षिसात्कृतः दृश्यते" इति उक्तवान्।

हिन्दुसेवाप्रतिष्ठानस्य प्रबन्धन्यासी, विद्याभारत्याः अखिल-भारतीय-संस्कृत-विषयप्रमुखः श्री च.मू. कृष्णशास्त्री उक्तवान् यत् - "एतावता प्रमाणेन एतावद्दीर्घकालं प्रचलन् एषः वर्गः भारते अभूतपूर्वः ऐतिहासिकश्च। द्वितीयकक्षातः संस्कृतपाठस्य अनिवार्य-शिक्षणं, प्रशिक्षण-वर्गाणाम् आयोजनं, संस्कृतसम्भाषणविधेः प्रसारः च - एतत् त्रयं विद्याभारत्याः विशिष्टा सिद्धिः" इति उक्तवान्।

विद्याभारत्याः अखिलभारतीयसहमन्त्री श्री बाबूलालशर्मा अतिथीनां परिचयसहितं स्वागतं कृतवान्। मा. मधुकरगङ्गाधर कटवडेकर धन्यवादसमर्पणं कृतवान्।

एतस्मिन् अखिल-भारत-संस्कृत-आचार्य-प्रशिक्षणवर्गे देशस्य नानाभागेभ्यः आगताः २१० आचार्याः, ३० प्रशिक्षकाश्च भागं वहन्तः सन्ति।

## वेदविज्ञानगुरुकुलस्य शुभारम्भाय भूमिपूजा

'संस्कृते वैज्ञानिकविचाराः बहवः सन्ति । विज्ञानविद्यार्थिनः अपि संस्कृतस्य अध्ययनार्थम् अवकाशं प्राप्नुयुः इति उच्चन्यायालयेन उक्तम् अस्ति । एतया दृष्ट्या वेदविज्ञानगुरुकुलस्य आरम्भार्थं क्रियमाणः एषः प्रयत्नः नितरां श्लाघ्यः'' इति राष्ट्रियस्वयंसेवकसङ्घस्य परमपूजनीयः सरसङ्घचालकः प्रो।। राजेन्द्रसिंहजीमहोदयः वेदविज्ञानगुरुकुलस्य शुभारम्भार्थं भूमिपूजां कृत्वा भाषमाणः उक्तवान् । एषः कार्यक्रमः मे-मासस्य दशमे दिनाङ्के कर्णाटकराज्ये बेङ्गलूरु-समीपस्थे 'चन्नेनहळ्ळि' प्रदेशे सम्पन्नः । एतत् विशिष्टं गुरुकुलं जनसेवाविश्वस्तमण्डल्या सञ्चालयिष्यते, या च इदानीं सवसतिकविद्यालयं कञ्चित् चालयन्ती अस्ति ।

कार्यक्रमस्य आरम्भे गुरुकुलारम्भस्य उद्देशं विवृण्वन् गुरुकुलस्य प्रमुखसञ्चालकः डा।। रामचन्द्रभट्टमहोदयः - ''अष्टादशसु विद्यास्थानेषु एकादशसङ्ख्याकानि विज्ञानसम्बन्धीनि एव सन्ति । आर्षेयायाः आधुनिक्याः च वैज्ञानिकदृष्टेः मेलनं करणीयम् इति उद्देशेन एतत् वेदविज्ञानगुरुकुलम् आरप्स्यते । अत्र वेदाध्ययनेन सह संशोधनम् अपि करिष्यते'' इति उक्तवान् ।

जनसेवाविद्यालयस्य मार्गदर्शकः श्री वै.वि. सोमयाजुलुवर्यः आरम्भे स्वागतं व्याहृतवान् । बहवः दातारः सभायां धनसाहाय्यम् उद्घोषितवन्तः । रा.स्व.सङ्घस्य दक्षिणाञ्चलक्षेत्रीयप्रचारकः श्री न. कृष्णप्पवर्यः, जनसेवा-विश्वस्तमण्डल्याः निर्वाहकविश्वस्तः श्री वै.के. राघवेन्द्ररावर्यः च वेदिकायाम् उपस्थितौ आस्ताम् । नेत्रतज्ज्ञः डा।। एम्.सि. मोदी, पञ्जाब-हरियाणा-उच्चन्यायालयस्य निवृत्तमुख्यन्यायाधीशः रामाजोयिस्वर्यः, रा.स्व.सङ्घस्य प्रान्तप्रचारकः श्री रामण्णवर्यः, शासकः कृ. नरहरिवर्यः अन्ये बहवः प्रमुखाः चापि समारम्भे उपस्थिताः आसन् ।

## भविष्यति वास्तुशास्त्रसमावेशः

ज्योतिश्शास्त्रस्य प्रमुखाङ्गस्य वास्तुशास्त्रस्य गतवैभवं स्मारयितुम्, एकत्कालोचिततताम् अवगमयितुं च आयोज्यमानायाः एतस्याः चिन्तनगोष्ठ्याः उद्घाटनं भारतस्य मुख्यनिर्वाचनाधिकारिणा टि.एन्. शेषन्वर्येण करिष्यते'' इति ख्यातः ज्योतिर्विज्ञानी डा।। बि.वि. रामन्वर्यः पत्रकारगोष्ठ्याम् उक्तवान् । एषा चिन्तनगोष्ठी 'रामन् - राजेश्वरी - संशोधन - प्रतिष्ठानेन' जून्मासस्य तृतीय-चतुर्थदिनाङ्कयोः बेङ्गलूरुनगरे समायोजयिष्यते ।

'देशे बहूनां नगराणां विन्यासः, देवस्थानादीनां निर्माणं, विविधभवनानां रचना च एतच्छास्त्रानुगुणम् एव कृतम् अस्ति । किन्तु दौर्भाग्यवशात् एतत् वास्तुशास्त्रम् इदानीम् उपेक्षितम् अस्ति । तदर्थम् एषा गोष्ठी' इति सः गोष्ठ्याः उद्देशं विवृतवान् । चिन्तनगोष्ठ्यां राष्ट्रस्य विविधभागेभ्यः समागमिष्यमाणाः सहस्राधिकाः प्रतिनिधयः, प्रसिद्धाः वास्तुविज्ञानिनः, आधुनिकाः अभियन्तारः, ज्योतिश्शास्त्रज्ञाः च भागं ग्रहीष्यन्ति इति श्रूयते । बहवः सामाजिक-राजकीय-नायकाः अपि समावेशेऽस्मिन् भागं ग्रहीष्यन्ति ।

## भविष्यति संस्कृतव्यवहारशिबिरम्

'लोकव्यवहारे संस्कृतस्य उपयोगितां प्रमाणीकर्तुं, संस्कृतज्ञानेन विज्ञानेन चिन्तनेन भाषाव्यवहारेण च भारतमहादेशम् उन्नेतुं, सद्गुणानां विकासार्थं, सद्भावनया मानवान् संस्कर्तुं सङ्घटयितुं च दशदिवसीयम् अखिल - भारतीय - संस्कृतव्यवहारशिबिरं जून्मासस्य २१ दिनाङ्कतः ३० दिनाङ्कपर्यन्तं नवदेहल्यां (श्री सनातनधर्मविद्यालयः, कीर्तिनगरम्, कीर्तिनगर 'ठाणा' समीपे, नवदेहली - ११० ०१५ इत्यत्र) भविष्यति'' इति भारतसंस्कृतपरिषत् विज्ञापयति ।

संस्कृतभाषायाः प्रचारे प्रसारे प्रवृत्ताः प्रतिनिधयः शिक्षकाः शिक्षिकाश्च, बन्धवो भगिन्यश्च, विद्यार्थिनो विद्यार्थिन्यश्च एतच्छिबिरार्थं परिषदा आमन्त्रिताः सन्ति । अधिकविवरणं ज्ञातुम् इच्छवः अधस्तनसङ्केताय पत्रं लिखेयुः -

**भारतसंस्कृतपरिषत्,**
सङ्कटमोचनाश्रमः,
रामकृष्णपुरम् सेक्टर् - ६,
नवदेहली - ११० ०२२

## भविष्यति इतिहासम् अधिकृत्य राष्ट्रिय-चिन्तनगोष्ठी

भारतीय-इतिहास-सङ्कलन-समितेः मद्रान्-नगरीया शाखा 'इण्टर्न्याषनल् सोसैटी फार् दि इन्वेस्टिगेषन् आफ् एन्षियन्ट् सिविलैझेषन्' इत्येतस्याः संस्थायाः सहयोगेन अगस्त्मासस्य १८, १९, २० दिनाङ्केषु मद्रास्नगरे एकां राष्ट्रस्तरीयां चिन्तनगोष्ठीं समायोजयिष्यति । परिणताः विद्वांसः एतस्यां गोष्ठ्यां भागं वहन्तः संशोधनपत्राणि प्रस्तुतीकरिष्यन्ति । आसक्तानां कृते पत्रव्यवहारार्थं सम्पर्कसङ्केतः -

Dr. K.M. Rao,
20, Appakannu Mudali Street,
Avvai Shanmugam Salai,
MADRAS - 600 014 (T.N.)

## संस्कृत-संस्कृति-शिबिरम्

एप्रिल्मासस्य २० दिनाङ्कतः ३० दिनाङ्कपर्यन्तं कर्णाटकस्थे पम्पा (हम्पे) क्षेत्रे संस्कृत-संस्कृति-शिबिरं प्रवृत्तम् । एतस्मिन् ३० बालकाः भागं गृहीतवन्तः । शिबिरे संस्कृतसम्भाषणस्य हिन्दुसंस्कृतेः च प्राधान्यम् आसीत् । परिसरः, जनसङ्ख्या, वित्तकोषव्यवहारः, देशभक्तिः, सामाजिक-सम्बन्धः इत्यादीन् विषयान् अधिकृत्य अपि अत्र उपन्यासाः प्रवृत्ताः । छात्राणां सुप्तप्रतिभायाः विकासार्थं विविधाः स्पर्धाः अपि प्रवृत्ताः । गायत्रीपीठस्य स्वामिपादाः स्वीये मठे एतस्य शिबिरस्य आयोजनं कृत्वा दश दिनानि यावत् आवासभोजनादिव्यवस्थां कृतवन्तः । संस्कृतकार्यकर्तारौ श्री पत्रय्यः, श्री श्रीनिवाससिद्धान्ती च अत्र शिक्षकत्वेन भागं गृहीतवन्तौ ।

## संस्कृत-सम्भाषणस्य अभ्यासार्थम् अत्र सन्ति कानिचन पुस्तकानि !
## सरलं निरूपणं, सरला भाषा च एतेषां वैशिष्ट्यम् !
## कृतपरिश्रमैः प्राप्तानुभवैः कार्यकर्तृभिः सज्जीकृतानि सन्ति एतानि !!
## विभिन्नाः विषयाः ! विभिन्नस्तरीयाणां कृते विविधाः अभ्यासाः !!

**शैक्षणिकानि -**

| | | रू. |
|---|---|---|
| संस्कृतव्यवहारसाहस्री | (कन्नड-अर्थसहिता) | ८.०० |
| - " - | (इंग्लीष्-अर्थसहिता) | ७.०० |
| - " - | (हिन्दी-अर्थसहिता) | १५.०० |
| कन्नडसंस्कृतकोषः (कन्नडलिपिः) | | १५.०० |
| कन्नड-संस्कृत-क्रियापदकोषः (कन्नडलिपिः) | | १५.०० |
| संस्कृतचित्रपदकोषः | | २५.०० |
| अभ्यासपुस्तकम् | | २०.०० |
| विभक्तिवल्लरी | | १८.०० |
| शतृशानजन्तमञ्जरी | | १८.०० |
| अभ्यासदर्शिनी | | ३५.०० |
| सम्भाषणसोपानम् | | ३०.०० |
| कालबोधिनी | | १०.०० |
| णत्वणिजन्तम् | | ७.०० |
| सन्देशसंस्कृतम् | | १०.०० |
| संस्कृतगुणनकोष्टकम् | | ५.०० |
| संस्कृतसुलेखावली | | १५.०० |
| बालकेन्द्रम् | | १२.०० |
| समासः | | २०.०० |

**अन्यानि पुस्तकानि -**

| | | रू. |
|---|---|---|
| नवरूपकम् | | २०.०० |
| साक्षिशिला (जानपदरूपकम्) | | १०.०० |
| जागरूको भव (वीथीनाटकम्) | | ३.०० |
| सुगन्धः | (कथासङ्ग्रहः) | ६.०० |
| बालकथामाला | ( -"- ) | १२.०० |
| पञ्चतन्त्रकथाः | ( -"- ) | १०.०० |
| रसप्रश्नाः | | ५.०० |
| गीतसंस्कृतम् | | ४.०० |
| गेयसंस्कृतम् | | ५.०० |
| शिशुसंस्कृतम् | | ८.०० |
| सुभाषितरसः | (कन्नडलिप्या, कन्नड-अर्थयुक्तः) | ६.०० |
| संस्कारसुधा | ( -" - ) | १०.०० |
| मातृचेतन (कन्नडभाषोपेतः) | | १५.०० |

**ध्वनिमुद्रिकाः -**

| | | |
|---|---|---|
| प्रयोगाः | (पुस्तकसहितम्) | ४०.०० |
| सम्भाषणसंस्कृतम् | ( -"- ) | ४०.०० |
| गीतसंस्कृतम् | | ३०.०० |
| शिशुसंस्कृतम् | | ३०.०० |
| श्रीकृष्णजननम् (यक्षगानम्) | | ३०.०० |
| संस्कृतोज्जीवनम् (भाषणम्) | | ३०.०० |
| रूपकसङ्ग्रहः (वीडियो क्यासेट्) | | १००.०० |

**एतदतिरिच्य विविधानि संश्लेषकाणि (स्टिकर्स्), शुभाशयपत्राणि, भित्तिपत्राणि (कन्नडलिप्या) चापि उपलभ्यन्ते ।**

**सूचना -**

* पुस्तकानि V.P.P. द्वारा न प्रेष्यन्ते । ये पुस्तकानि क्रेतुम् इच्छन्ति ते धनं [पुस्तकमूल्यं + बुक्पोस्ट्व्ययं + रिजिस्टर् व्ययं (६.००) च] पूर्वम् एव प्रेषयेयुः ।
* ध्वनिमुद्रिकार्थं प्रेषणव्ययः - रू. १५.००
* धनं 'Pallava Prakashana'नाम्ना प्रेषणीयम् ।

*सम्पर्कसङ्केतः -*

**पल्लव प्रकाशनम्**

**'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५ दूरभाषा - ०८० - ६६१३०५२**

No. L/NP/KRNU/475 SAMBHASHANA SANDESHAH (Samskrit Monthly) June - 1995 R. No. 58190/94




Printed, Publishe[illegible] Owne[illegible] by K. Narayana, "Aksharam", 8th Cross, 2nd Phase, Girinagar, Bangalore - 560 085 Ph. : 66172[illegible]52 Editor : Janardana Hegde Printed at : Span Print, Bangalore - 4 Ph. : 66288